न्यायाम्भोनिधि-सद्धर्मोद्धारक-सूरिचक्रचूडामणि श्रीमद्विजयानन्दसूरीश्वरपट्टप्रभावक-
सद्धर्मरक्षक श्रीमद्विजयकमलसूरीश्वरपट्टालङ्कार-व्याख्यानवाचस्पति श्रीमद्विजय
लब्धिसूरीश्वरोपदिष्ट, श्रीविजयदेवसूरिसंघसत्का श्रीगोडीजीजैनउपाश्रय
कार्यवाहकाभ्यां नगीनभाईसुत-भाईचन्दभाई मोतीचन्दसुत-मणि
लालभाई-इत्येताभ्यामिदं ग्रन्थरत्नं प्राकाश्यं नीतम् ॥

# ŚĀSTRA VĀRTĀ-SAMUCHCHAYA

BY

## Śrī HARIBHADRA SŪRI

WITH

His own Commentary named Dikpradā.

Copies 1000 ] Price Rs. 2-0-0. [ A. D. 1929

# शास्त्रवार्त्तासमुच्चयस्योपक्रमः ।



इह हि मनीषिणाऽवाप्तविवेकेनावेक्ष्य चातुर्गतिकसंसारस्य दुःखबहुलतां तदुच्छेदाय यतितव्यमेवेति विवादशून्यो मार्ग आस्तिकानां, तथापि तत्र तत्रास्तिकशास्त्रेषु तदुच्छेदमार्गस्य नानात्वमवेक्ष्यानिपुणमतीनां स्यादेवाबाधितेऽपि तदुच्छेदोपाये प्रवृत्तिव्याघातकारिण्यारेकेति न नूतनं, प्रेक्ष्य चेदं जगद्वृत्तं श्रीमन्तो हरिभद्रसूरयो विधायाप्यनेकानि नन्द्यनुयोगद्वारावश्यकजीवाभिगमप्रज्ञापनागमवृत्तीः निर्माय निर्माय पञ्चाशकपञ्चवस्तुषोडशकाष्टकविंशिकादीनि असाधारणानि विधिप्रकरणानि शास्त्राणि धर्मसंग्रहणीललितविस्तरानेकान्तजयपताकादीनि चान्य-यूथीयमतखंडननिपुणानि विरचय्य सर्वपार्षदं शास्त्रं रचयितुकामाः प्राक् तत्तद्दर्शनमतपदार्थमात्रप्रतिपादनपर षड्दर्शनसमुच्चयलोकतत्त्व-निर्णयौ विनिर्माय निखिलमतैदम्पर्यदर्शनपुरस्सरतत्तन्मतपरीक्षापरं निबंधमेनं शास्त्रवार्तासमुच्चयाख्यमनुपममातेनुः, तथाच यथा षड्दर्शन-समुच्चयस्य समुच्चयपदाङ्कितत्वेन सर्वदर्शनप्रतिपादकता तथाऽस्यापि सर्वयूथीयशास्त्रैदम्पर्यप्रतिपादकता स्पष्टैव, सति चैवं योगदृष्टियोग-बिन्द्वादिवद् यदत्र परतीर्थप्रवर्तकानां तदनुसारिणां च यद्बहुमानवाचकं पदादि तत्र श्रीमतां सम्यक्त्वमालिन्यापादकं न चेतरेषाम-तथाविधानामनुकरणीयं, स्पष्टीकृतं चेदं तत्त्वं श्रीमद्भिरीश्वरवादे 'यतः केषांचिदादरः। अतस्तदानुगुण्येन, तस्य कर्तृत्वदेशना ॥ २०६ ॥' सांख्यवादे च 'मूर्त्तयाऽप्यात्मनो योगो० ॥ २३६ ॥ एव प्रकृतिवादोऽपि, विज्ञेयः सत्य एव हि । कपिलोक्तत्वतश्चैव, दिव्यो हि स महामुनिः ॥ २३७ ॥ इत्यादिवाक्यैः, तथाच तत्त्वतो जिनप्रणीतानुसारितत्त्वप्रथनपरतां तेषां निदर्श्य तदनुसारिणां तत्त्वपथेऽवतारण-

यथार्थमिदं शास्त्रं शास्त्रवार्त्तासमुच्चयाख्यमिति प्रत्येष्यन्त्येव प्रतिभापारावाराः प्राज्ञाश्चेत्ते निष्पक्षतया अवबोद्धारो ग्रन्थरहस्यस्य, एवं चावश्यकमुन्मुद्रणमस्य, यद्यपि न्यायाचार्यकृतं विवरणं मुद्रितपूर्वं देवचंद्र लालभाई जैनपुस्तकोद्धार फंडनाम्न्या संस्थयाऽस्यैव पूर्वभागतया तथापि स्वोपज्ञां विवृत्तिमुपलभ्य स्याद्विदुषां कर्तुर्विवक्षाया यथार्थतयाऽवबोधः इत्युदीक्ष्य स्वोपज्ञया वृत्त्याऽलंकृतोऽयमुन्मुद्रितोऽधुना तयैव, पर श्रीदेवसूरसंघकार्यवाहकागुहादाविर्भावितस्तयातेषांद्वारेति । कर्त्तारश्चास्य स्वोपज्ञस्य श्रीमन्तो हरिभद्राचार्याः इति प्रसिद्धतमं, श्रीमदभयदेवीयपञ्चाशकाद्युत्तया विरहांकितत्वाच्च तत्कृततयाऽनिश्चयोऽपिस्य, सत्तासमयस्य सिद्धौ चैषां यतितमनेकैर्विद्वद्भिः अस्माभिश्च पञ्चाशकयोगदृष्टयुपमितीनामुपोद्घाते, परमद्यापि न यथावन्निश्चितं कैश्चिदपि प्रोक्तं, पर प्रागुदितमेव वयमधुनापि मन्महे यदुत वैक्रमीय-पञ्चाशीत्यधिकपञ्चशतीसिते वर्षे एव स्वर्जग्मुः पूज्याः, श्रीमद्भिर्नन्दीसूत्रव्याख्याने पूर्वश्रुतस्य सर्वथाऽव्यवच्छिन्नतां परिकर्मादेश्च सर्वथा व्यवच्छिन्नतां ब्रुवद्भिः स्वसत्तासमयः पूर्वश्रुतकालनैकट्येन स्पष्टमाटंकितः; तदेवं प्राचीनतमं विलोक्य निबन्धमद्वितीयं भव्या भावयित्वाऽऽत्मानं यथार्थागमवाक्यैः सफलीकुर्वन्तु जन्माव्याबाधपदप्रापकानुष्ठानैरित्याशासते—

१९८४ श्रावण
शुक्लतृतीयाया
राजनगरे.

आनन्दसागराः

# शेठ देवचद् लालभाई जैन पु० फंडना हाल मळतां ग्रंथो

| क्रम | नाम | किंमत |
|---|---|---|
| ५३ | मानवकाव्य मौ० १ डु | ० १२ ० |
| ५४ | अनुक्तिप्रपस्ति उत्तरार्ध | २–०–० |
| ५६ | श्रीपालचरित्र ( संस्कृत ) | ० १४ ० |
| ५७ | सूक्तमुक्तावली | २–०–० |
| ५८ | प्रवचनसारोद्धार भाग १ लो | १–०–० |
| ५९ | …ऐतालीपपचा | १–८–० |
| | …म्यानकचरित्र | १–०–० |
| | बालभाषारी | ०–८–० |
| | …पालचरित्र प्राकृत | १–४–० |
| ६४ | प्रवचनसारोद्धार भाग २ जो | ४–०–० |
| ६ | लोकप्रकाशे द्रव्यलोक भाग १ लो | २–०–० |
| | …काव्य मौ० ७ मुं | १–८–० |
| ६७ | तत्वार्थाधिगमसूत्र भाग १ लो | १–०–० |
| ६८ | नवपद्मकरण लघुवृत्ति | १–०–० |
| ६९ | पंचवस्तुक सटीक | १–०–० |
| ७० | मानवकाव्य मौ० ८ मुं | १–८–० |
| ७१ | भाषारत्नदीप | १–८–० |
| ७२ | विचाररत्नाकर | १–०–० |
| ७३ | नवपद्मकरण बृहद्वृत्ति | ४–०–० |
| ७४ | लोकप्रकाशे क्षेत्रलोक भाग २ जो | २–८–० |
| ७५ | महावीरचरित्र प्राकृत | ४–०–० |
| | मर्यरत्नावली (मपदली) | — |
| | लोकप्रकाशे काललोक भाग ३ जो | |
| | तत्वार्थाधिगमसूत्र … | |

# स्वोपज्ञवृत्त्याऽलंकृतस्य शास्त्रवार्त्ता-समुच्चयस्य विषयानुक्रमः ।



# शेठ देवचंद लालभाई जैन पु० फंडना हाल मळता ग्रंथो

| अंक | नाम | किंमत |
|---|---|---|
| ५३ | आनंदकाव्य मौ० ३ जुं | ० १२ ० |
| ५५ | मधुप्रियप्रशस्ति उत्तरार्ध | २–०–० |
| ५६ | श्रीपालचरित्र ( संस्कृत ) | ० १४ ० |
| ५७ | सूक्तमुक्तावली | २–०–० |
| ५८ | प्रवचनसारोद्धार भाग १ लो | ३–०–० |
| ५९ | तंदुलवैतालीपयन्ना | १–८–० |
| ६० | चित्रविलासनकचरित्र | १–०–० |
| ६२ | सुबोधासमाचारी | ०–८–० |
| ६३ | श्रीपालचरित्र प्राकृत | १–४–० |
| ६४ | प्रवचनसारोद्धार भाग २ जो | ४–०–० |
| ६५ | लोकप्रकाशे द्रव्यलोक भाग १ लो | २–०–० |
| ६६ | आनंदकाव्य मौ० ७ मुं | १–८–० |
| ६७ | तत्त्वार्थाधिगमसूत्र भाग १ लो | ६–०–० |
| ६८ | नवपदप्रकरण लघुवृत्ति | १–०–० |
| ६९ | पंचवस्तुक सटीक | ३–०–० |
| ७० | आनंदकाव्य मौ० ८ मुं | १–८–० |
| ७१ | भाषारत्नदीप | १–८–० |
| ७२ | विचाररत्नाकर | ३–०–० |
| ७३ | नवपदप्रकरण बृहद्वृत्ति | ४–०–० |
| ७४ | लोकप्रकाशे क्षेत्रलोक भाग २ जो | २–८–० |
| ७५ | महावीरचरित्र प्राकृत | ४–०–० |
| | धर्मरत्नावली (मधकती) | प्रेसमां |
| | लोकप्रकाशे काललोक भाग ३ जो | प्रेसमां |
| | तत्त्वार्थाधिगमसूत्र भाग २ जो | प्रेसमां |
| | प्रियंकर नृपकथा | प्रेसमां |

प्राप्तिस्थान सुरत गोपीपुरा

# स्वोपज्ञवृत्त्याऽलंकृतस्य शास्त्रवार्त्ता–समुच्चयस्य विषयानुक्रमः ।



# शास्त्रवार्तासमुच्चयमूलश्लोकानामकारादिसूची ।



अर्हम् ।

स्वोपज्ञवृत्तिसमन्वितः श्रीमद्धरिभद्रसूरिविरचितः

# श्रीशास्त्रवार्त्तासमुच्चयः ।



स्वपरोपकाराय शास्त्रवार्त्तासमुच्चयाख्यस्य प्रकरणस्य विवरणमारभ्यते, तत्र चाचार्यः शिष्टसमयप्रतिपालनाय विघ्नविनायकोपशान्तये प्रयोजनादिप्रतिपादनार्थं चादावेवेमं श्लोकमुपन्यस्तवान्—

**प्रणम्य परमात्मानं, वक्ष्यामि हितकाम्यया । सत्त्वानामल्पबुद्धीनां, शास्त्रवार्त्तासमुच्चयम् ॥ १ ॥**

तत्र शिष्टानामयं समयो यदुत शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्त्तमानाः सन्त इष्टदेवतानमस्कारपूर्वकं प्रवर्त्तन्ते, अयमप्याचार्यो न हि न शिष्ट इत्यतस्तत्समयप्रतिपालनाय, तथा—"श्रेयांसि बहुविघ्नानि भवन्ती"त्युक्तं, यतः—"श्रेयांसि बहुविघ्नानि, भवन्ति महतामपि । अश्रेयसि प्रवृत्तानां, क्वापि यान्ति विनायकाः ॥ १ ॥" इति, इदं च प्रकरणं सम्यग्ज्ञा-

नहेतुस्याच्छ्रेयोभूतमतो मा भूद्विघ्न इति विघ्नविनायकोपशान्तये, तथा प्रेक्षापूर्वकारिणः प्रयोजनादिशून्ये न प्रवर्तन्त इति प्रयोजनादिप्रतिपादनार्थं चेति, तत्र 'प्रणम्य परमात्मान'मित्यनेनेष्टदेवतास्तवमाह, अस्य च भावमङ्गलत्वादत एव विघ्नविनायकोपशान्तिः, 'वक्ष्यामि हितकाम्यया । सत्त्वानामल्पबुद्धीनां, शास्त्रवार्तासमुच्चयम् ।' इत्यनेन तु प्रयोजनादीति श्लोकसमुदायार्थः, अवयवार्थस्तु-प्रणम्य-सम्यग् मनोवाक्कायैर्नत्वा, कमित्याह—'परमात्मानं' परमश्चासावात्मा च परमात्मा तं, सकलकर्मरहितं देवाधिदेवमित्यर्थः, तं प्रणम्य, किमित्याह—'वक्ष्यामि' अभिधास्ये 'शास्त्रवार्तासमुच्चयं' शास्त्रोदेशानां समूहमिति योगः, कथमित्याह—'हितकाम्यया' हितबुद्ध्या 'सत्त्वानां' प्राणिनाम् 'अल्पबुद्धीनां' तत्त्वबुद्धीनां विशिष्टबुद्धीनां वा, प्रेक्षावतस्तेषु हितकाम्यया प्रवृत्तेः, तेषां माध्यस्थ्यप्रमोदविषयत्वात्, "मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि सत्त्वगुणाधिकक्लिश्यमानाविनेयेषु"(तत्त्वा० अ० ७ सू० ६)ति वचनात्, ततश्च बालबुद्धिहितकाम्यया (काम्या) कर्तुरनन्तरप्रयोजनं, परम्परप्रयोजनं तु कर्मक्षयान्मुक्तिः, अभिधेयं शास्त्रवार्ता, क्रियाऽऽनन्तर्यलक्षणं सम्बन्धः, व्यासक्रियातः समासक्रियायाः क्रियानन्तरत्वात्, श्रोतॄणां तु तदर्थपरिज्ञानाद्येव प्रयोजनादीति कृतं विस्तरेण ॥ १ ॥ किंविशिष्टं शास्त्रवार्तासमुच्चयमित्याह—

यं श्रुत्वा सर्वशास्त्रेषु, प्रायस्तत्त्वविनिश्चयः । जायते द्वेषशमनः, स्वर्गसिद्धिसुखावहः ॥ २ ॥

'यं' शास्त्रवार्तासमुच्चयं 'श्रुत्वा' समाकर्ण्य 'सर्वशास्त्रेषु' न्यायशास्त्रादिषु 'प्रायो' बाहुल्येन 'तत्त्वविनिश्चयः'

उपादेयतद्भावावगमो जायते, किंविशिष्टः? इत्याह—'द्वेषशमनः' मत्सरनाशनः, स एव विशेष्यते—'स्वर्गसिद्धिसुखावहः' ज्ञानोपशमाभ्यां शुद्धप्रवृत्त्यादेर्वा मुक्तिसुखप्रापकमित्यर्थः ॥ २ ॥ सर्वशास्त्रसमुच्चयमाह—

दुःखं पापात्सुखं धर्मात्, सर्वशास्त्रेषु संस्थितिः । न कर्त्तव्यमतः पापं, कर्त्तव्यो धर्मसञ्चयः ॥ ३ ॥

'दुःखं' पापलक्षणं तत् 'पापात्' अधर्माद्भवति, 'सुखम्' आह्लादलक्षणं तद् 'धर्मात्' प्रवृत्तिनिवृत्तिरूपाद्भवति, इयं सर्वशास्त्रेषु 'संस्थितिः' सम्यग्व्यवस्था, यत एवं न कर्त्तव्यमतः पापं, किं तर्हि ?, कर्त्तव्यो 'धर्म्मसञ्चयः', यथाशक्त्या प्रभूतो धर्म इत्यर्थः ॥ ३ ॥ पापधर्महेतुपरिहारासेवनाभ्यां तदकरणादीति तद्धेतूनाह—

हिंसाऽनृतादयः पञ्च, तत्त्वाश्रद्धानमेव च । क्रोधादयश्च चत्वारः, इति पापस्य हेतवः ॥ ४ ॥

विपरीतास्तु धर्म्मस्य, एत एवोदिता बुधैः । एतेषु सततं यत्नः, सम्यक्कार्यः सुखैषिणा ॥ ५ ॥

'हिंसाऽनृतादयः पञ्च' हिंसाऽनृतस्तेयाब्रह्मपरिग्रहाः, आदिशब्दादवरोधेऽप्यनृतग्रहणं प्राधान्यख्यापनार्थं, 'तत्त्वाश्रद्धानमेव च' मिथ्याभिनिवेश इति भावः, 'क्रोधादयश्च चत्वारः' क्रोधमानमायालोभाः 'इति' एवं त एवंप्रकारा वा पापस्य हेतवः, अशुभकर्म्मबन्धजनका इत्यर्थः ॥ ४ ॥ 'विपरीतास्तु' अहिंसासत्यास्तेयब्रह्मापरिग्रहतत्त्वश्रद्धानक्षान्त्यादयः धर्मस्यैत एव 'उदिताः' उक्ताः 'बुधैः' पण्डितैः हेतव इति, न्यायेन एवम् अत एव 'एतेषु' धर्महेतुषु 'सततम्' अनारतमेव 'यत्नः' प्रयासः 'सम्यग्' विधिना कार्यः, केनेत्याह—'सुखैषिणा' कल्याणकामेनेत्यर्थः ॥ ५ ॥

'सम्यक्करणोपायमाह—

साधुसेवा सदा भक्त्या, मैत्री सत्त्वेषु भावत । आत्मीयग्रहमोक्षश्च, धर्महेतुप्रसाधनम् ॥ ६ ॥

'साधुसेवा' गुणवदुपासना 'सदा' सर्वकाल 'भक्त्या' बहुमानेन, तथा 'मैत्री' प्रत्युपकारनिरपेक्षा प्रीतिः 'सत्त्वेषु' प्राणिषु 'भावत' परमार्थेन, तथा आत्मीयमिति ग्रहणमात्मीयग्रहः—तदन्यस्वीकारस्तन्मोक्षश्च, बाह्यसङ्गत्याग इति भावः, एतत्त्रितयं 'धर्म्महेतुप्रसाधनं' हिंसादिनिवर्त्तकप्रसाधनमिति च, एकवचननिर्देशः कात्स्न्येन समस्तप्रसाधनत्व ज्ञापनार्थः ॥ ६ ॥ साधुसेवादिफलमाह—

उपदेश शुभो नित्य, दर्शनं धर्म्मचारिणाम् । स्थाने विनय इत्येतत्, साधुसेवाफल महत् ॥ ७ ॥

मैत्री भावयतो नित्यं, शुभो भाव प्रजायते । ततो भावोदकाज्जन्तोर्द्वेषाग्निरुपशाम्यति ॥ ८ ॥

अशेषदोषजननी, निश्शेषगुणघातिनी । आत्मीयग्रहमोक्षेण, तृष्णाऽपि विनिवर्त्तते ॥ ९ ॥

उपदेशः 'शुभ' कुशलसाधको नित्यं, तथा दर्शनं 'धर्मचारिणां' पवित्रसाधूनामेव, तथा स्थाने विनय इति—तद्वन्दनाविनेति, एतत्—एवंभूत साधुसेवाफल महत्, धर्मार्थसाधनमिति ॥ ७ ॥ 'मैत्रीम्' उक्तलक्षणां 'भावयत' मभ्यस्यतः 'नित्यं' सर्वकाल 'शुभो भाव' प्रजायते' प्रशस्तमन्तःकरणं भवति, ततो 'भावोदकात्' परमार्थोदक

भूतात् 'जन्तोः' प्राणिनः द्विषाग्निः' मत्सरानलः 'उपशाम्यात' निर्वाति ॥८॥ हिंसानृताज्ञानादिदोषमाता 'निःशेषगुणघातिनी' उपशमादिगुणनाशिनी 'आत्मीयग्रहमोक्षेण' बाह्यसङ्गत्यागेन 'तृष्णाऽपि' लौल्यपरिणतिरपि निवर्त्तते ॥९॥

एवं गुणगणोपेतो, विशुद्धात्मा स्थिराशयः । तत्त्वविद्भिः समाख्यातः, सम्यग् धर्मस्य साधकः ॥१०॥

'एवम्' उक्तेन प्रकारेण गुणगणोपेतः सन् 'विशुद्धात्मा' अत्यन्तापायहेतुमलरहितः 'स्थिराशयः' स्थिरचित्तः 'तत्त्वविद्भिः' सर्वज्ञैः 'समाख्यातः' कथितः 'सम्यग्' आगमोक्तेन विधिना धर्मस्य साधकः, नियमभावित्वेन, धर्महेतुसाधनेऽपि धर्म्मसाधकः, कारणे कार्योपचारादिति ॥ १० ॥ उपादेयहेत्वाराधनादि न्याय्यमित्याह—

उपादेयश्च संसारे, धर्म्म एव बुधैः सदा । विशुद्धो मुक्तये सर्वं, यतोऽन्यद् दुःखकारणम् ॥ ११ ॥

अनित्यः प्रियसंयोग, इहेर्ष्याशोकवत्सलः । अनित्यं यौवनं चापि, कुत्सिताचरणास्पदम् ॥ १२ ॥

अनित्याः सम्पदस्तीव्रक्लेशवर्गसमुद्भवाः । अनित्यं जीवितं चेह, सर्वभावनिबन्धनम् ॥ १३ ॥

पुनर्जन्म पुनर्मृत्युर्हीनादिस्थानसंश्रयः । पुनः पुनश्च यदतः, सुखमत्र न विद्यते ॥ १४ ॥

प्रकृत्यसुन्दरं ह्येवं, संसारे सर्वमेव यत् । अतोऽत्र वद किं युक्ता, क्वचिदास्था विवेकिनाम् ? ॥ १५ ॥

मुक्त्वा धर्मं जगद्वन्द्यमकलङ्कं सनातनम् । परार्थसाधकं धीरैः, सेवितं शीलशालिभिः ॥ १६ ॥

'उपादेयश्च' ग्राह्यश्च 'संसारे' भवनिधौ धर्म एव प्रधानपुरुषार्थरूपः 'बुधैः' पण्डितैः, सदा दुःखदभोगादिकाल-

व्यवच्छेदेन, किंविशिष्टः? इत्याह—'विशुद्धं' निरतिचारः, 'मुक्तये' सर्वप्राणसाऽभावेन मुक्त्यर्थं, विशुद्धग्रहणेनास्य गतत्वेऽपि प्राधान्यख्यापनार्थं भेदेनोपादानं, किमित्येतदेवम्? इत्याह—सर्वं यतोऽन्यत्—प्रियसंयोगादि 'दुःखकारणं' दुःखनिमित्तम् ॥ ११ ॥ तथा चाह—'अनित्ये'त्यादि, 'अनित्यः' अशाश्वतः 'प्रियसंयोग' प्रियसमागमः 'इह' संसारे, स एव विशेष्यते—'ईर्ष्याशोकवत्सल' प्रतिपक्षाभ्युदयजनितो मत्सरविशेष ईर्ष्या, तदत्ययादिचिन्ताप्रभवो दुःखभेदः शोकः, एतद्वत्सल इति—एतत्प्रियः, अनेन प्रकृतिदोष सम्बन्धदोषं चाह, 'अनित्यं यौवनं चापि', कुसुमसारं, 'कुत्सिताचरणास्पदं' असद्व्यवहारनिदानं, दोषद्वययोजना पूर्ववत् ॥ १२ ॥ 'अनित्या' इत्यादि, अनित्याः सम्पदः, तडिद्विलसितोपमाः तीव्रक्लेशवर्गसमुत्थयाः, दुःखोपादाना इत्यर्थः, दोषद्वयं पूर्ववत्, 'अनित्यं जीवितं चेह', नित्यमनश्वर, सर्वभावनिबन्धनम्, सकलव्यवहारकारणमित्यर्थः, दोषद्वयं पूर्ववदेव ॥ १३ ॥ तथा—'पुने'त्यादि, पुनर्जन्म पुनर्मृत्यु हीनादिस्थानसंश्रय', मातिश्चयादीनहीनतरपरिग्रहः, 'पुनः पुनश्च यदतः' सुखमत्र न विद्यते', संसारे इति ॥ १४ ॥ 'प्रकृत्ये'त्यादि, 'प्रकृत्यसुन्दरं' स्वभावाशोभनमेव 'एवम्' उक्तेन प्रकारेण संसारे सर्वमेव 'यत्' प्रियसंयोगादि; अतोऽत्र संसारे यत् किं 'युक्ता?' साध्वी कचित् 'आस्था' परिग्रहबुद्धिः 'विवेकिनां' पण्डितानां ?, नैवेत्यर्थः ॥ १५ ॥ अपवादमाह—'मुक्त्वे'त्यादि, मुक्त्वा धर्मं, किंविशिष्टमित्याह—'जगद्वन्द्यं' त्रैलोक्यसम्वन्दनीयम्, 'अकलङ्कं' अध्यात्मकल्याणकलङ्कवर्जितं, 'सनातनं' नित्यं, 'परार्थसाधकं', तीर्थकरादिभावहेतुत्वेन, 'धीरैः सेवितं' स्थिराशयैराचरितं शीलवद्भिरिति ॥ १६ ॥ पराभिप्रायमाह—

आह तत्रापि नो युक्ता, यदि सम्यग् निरूप्यते । धर्मस्यापि शुभो यस्माद्बन्ध एव फलं मतम् ॥१७॥
न चायसस्य बन्धस्य, तथा हेममयस्य च । फले कश्चिद्विशेषोऽस्ति, पारतन्त्र्याविशेषतः ॥ १८ ॥
तस्माद्धर्मवत्त्याज्यो, धर्मोऽप्येवं मुमुक्षुभिः । धर्माधर्मक्षयान्मुक्तिर्मुनिभिर्वर्णिता यतः ॥ १९ ॥

आह परः—'तत्रापि' धर्मे नो युक्ता आस्था यदि 'सम्यक्' सूक्ष्मनीत्या 'निरूप्यते' पर्यालोच्यते, किमित्यत आह—'धर्म्मस्यापि' उक्तलक्षणस्य 'शुभः' सत्ता(साता)दिहेतुर्यस्माद्बन्ध एव फलं मतं, लोक इति ॥१७॥ न च शुभबन्धहेतुत्वेनात्रास्था, अन्योऽप्याह—'न चे'त्यादि, न चायसस्य बन्धस्य—लोहनिगडादेः तथा हेममयस्य च—कनकशृङ्खलादेः फले कश्चिद्विशेषोऽस्ति, कस्मात्? इत्याह—पारतन्त्र्याविशेषतः, उभयोरपि ॥१८॥ उपसंहरन्नाह—'तस्मादि'त्यादि, यस्मादेवं तस्मादधर्मवत्त्याज्यो धर्मोऽप्येवं 'मुमुक्षुभिः' मोक्तुमिच्छुभिः, उपपत्त्यन्तरमाह—धर्माधर्मक्षयान्मुक्तिर्मुनिभिर्वर्णिता यतः, तेषु तेषु शास्त्रेष्विति ॥ १९ ॥ अत्र परिहारमाह—

उच्यते एवमेवैतत्, किन्तु धर्मो द्विधा मतः । संज्ञानयोग एवैकस्तथाऽन्यः पुण्यलक्षणः ॥ २० ॥
ज्ञानयोगस्तपः शुद्धमाशंसादोषवर्जितम् । अभ्यासातिशयादुक्तं, तद्विमुक्तेः प्रसाधकम् ॥ २१ ॥
धर्मस्तदपि चेत् सत्यं, किं न बन्धफलः स ? यत् । आशंसावर्जितोऽन्योऽपि, किं नैवं? चेत् न यत्तथा ॥२२॥

भोगमुक्तिफलो धर्म्मः, सप्रवृत्तीतरात्मकः । सम्यग्मिथ्यादिरूपश्च, गीतस्तन्त्रान्तरेष्वपि ॥ २३ ॥
तमन्तरेण तु तयोः, क्षयः केन प्रसाध्यते? । सदा स्यान्न कदाचिद्वा, यद्यहेतुक एव सः ॥ २४ ॥
तस्मादवश्यमेष्टव्यः, कश्चिद्धेतुस्तयोः क्षये । स एव धर्मो विज्ञेयः, शुद्धो मुक्तिफलप्रदः ॥ २५ ॥
धर्माधर्मक्षयान्मुक्तिर्यच्चोक्तं पुण्यलक्षणम् । हेय धर्मं तदाश्रित्य, न तु सज्ज्ञानयोगकम् ॥ २६ ॥
अतस्तत्रैव युक्तास्था, यदि सम्यग् निरूप्यते । संसारे सर्वमेवान्यद्दर्शितं दुःखकारणम् ॥ २७ ॥
तस्माद्ध जायते मुक्तिर्यथा मृत्यादिवर्जिता । तथोपरिष्टाद्वक्ष्यामः, सम्यक् शास्त्रानुसारतः ॥ २८ ॥

एष्यत एवमेवैतद् यदुक्तं भवता, किन्तु धर्मो द्विधा 'मतः' इष्टः शास्त्रकारैः, सज्ज्ञानक्रियारूप एवैकः, 'तथाऽन्यः' पुण्यलक्षणः, पुण्येन-सातादिना लक्ष्यत इति पुण्यलक्षणः-पुण्यहेतुराश्रवमात्रम्, 'हेय' इत्यर्थः ॥ २० ॥ 'ज्ञाने'त्यादि, 'ज्ञानयोग' ज्ञानक्रियारूपस्तपः 'शुद्धम्' मिथ्यासेवनमलरहितम् 'आशंसादोषवर्जितं' देवादिफलाभिसन्धिरहितं, प्रधानमलत्वादस्य भेदेनाभिधानम्, अभ्यासातिशयप्रादुर्भूतं सर्वसंवरेण मुक्तेः प्रसाधकमिति, तथोपरिष्टाद्वक्ष्यामः ॥ २१ ॥ 'धर्म' इत्यादि, धर्मत्वेऽपि चैतयोः, एतदाशङ्क्याह-तत्र धर्मे एवेत्यर्थे । अन्यत्र आह-किन्तु यत्फला सः-तपोलक्षणो धर्मः, इत्याह-'पर' प्रधानम् आशंसावर्जितम् अन्योऽपि-पुण्यलक्षणः मोक्षफल [illegible]

किं नैवम्–अवन्धफलः? चेदत्राह–न यत्तथा–आशंसावर्जित इति ॥२२॥ एतदेव धर्म्मद्वैविध्यं तन्त्रान्तराभ्युपगमतोऽपि
दर्शयति—'भोगे'त्यादि, भोगमुक्तिफलो धर्मः–पुण्यलक्षणो भोगफलः शुद्धतपोरूपो मुक्तिफलः शैवानां, स एव प्रवृ-
त्तीतरात्मकः, प्रवृत्तिनिवृत्तिरूपस्त्रैविद्यवृद्धानाम्, सम्यग्मिथ्यादिरूपश्च शाक्यविशेषाणाम्, आदिशव्दाद्धेयोपादेयाभ्यु-
दयनिःश्रेयसपरिग्रहः, एवमर्थभेदादेव गीतस्तन्त्रान्तरेष्वप्ययं द्विभेद इति ॥ २३ ॥ उपचयोपपत्तिमाह—'तमि'त्यादि,
'तमन्तरेण तु' ज्ञानक्रियायोगलक्षणं धर्मं विनैव, 'तयोः' संसारफलयोर्धर्माधर्मयोः क्षयः केन प्रसाध्यते ?, नान्यो हेतु-
रस्तीत्यभिप्रायः, अहेतुत्वे दोषमाह–सदा स्यान्न कदाचिद्वा स्यात् यद्यहेतुक एव सः–तयोः क्षय इति ॥ २४ ॥ उपसंह-
रन्नाह—'तस्मा'दित्यादि, यत एवं तस्मादवश्यमेष्टव्यः कश्चिद्धेतुस्तयोः–धर्माधर्मयोः क्षये, स एव धर्मो विज्ञेय उक्तल-
क्षणः शुद्धो मुक्तिफलप्रद इति ॥ २५ ॥ चोद्यशेषं परिहरति—'धर्मे'त्यादि, धर्माधर्मक्षयान्मुक्तिर्यच्चोक्तं मुनिभिस्तत्र
पुण्यलक्षणं 'हेयधर्मम्' आशंसावन्तं तदाश्रित्योक्तं न तु 'सञ्ज्ञानयोगकम्' उपादेयधर्मं, सञ्ज्ञानयोग एव संज्ञानयो-
गकः, सञ्ज्ञायां कन् । यतश्चैवम्—'अत' इत्यादि, अतस्तत्रैव–उक्तलक्षणे धर्मे युक्तास्था यदि 'सम्यग्' अविपरीतं
निरूप्यते, किमिति? अत आह—'संसारे सर्वमेवान्यत्' प्रियसंयोगादि दर्शितं दुःखकारणमिति ॥ २७ ॥ 'तस्माच्चे'-
त्यादि, तस्माच्च धर्माज्जायते मुक्तिः 'यथा' येन प्रकारेण 'मृत्यादिवर्जिता' मृत्युरोगादिरहिता तथोपरिष्टाद्वक्ष्यामः,
'तथैव ज्ञानयोगस्ये'त्यादिना, 'सम्यक्शास्त्रानुसारतः' सदागमानुसारेणेत्यर्थः ॥ २८ ॥

इदानीं तु समासेन, शास्त्रसम्यक्त्वमुच्यते । कुवादियुक्त्यपव्याख्यानिरासेनाविरोधत ॥ २९ ॥

'इदानीं'मित्यादि, इदानीं तु 'समासेन' सङ्क्षेपेण 'शास्त्रसम्यक्त्वमुरूपते' आगमस्याविपरीतार्थाभिधायकत्वमुच्यते, कथमित्याह—'कुवादियुक्त्यपव्याख्यानिरासेन' कुवादिप्रणीतयुक्तिनिरासेन अपव्याख्यानिरासेनाविरोधतः–सर्वशास्त्रापिरोधेन ॥ २९ ॥ तत्रादौ शास्त्रवादोपन्यासेनाह—

पृथिव्यादिमहाभूतमात्रकार्यमिदं जगत् । न चात्मादृष्टसद्भावं, मन्यन्ते भूतवादिन ॥ ३० ॥

"पृथिव्यादी"त्यादि 'पृथिव्यादिमहाभूतमात्रकार्यं–पृथिव्यप्तेजोवायुमात्रकार्यमिदं–प्रत्यक्षत उपलभ्यमानं 'जगत्' चराचरं, न चात्मादृष्टसद्भाव मन्यन्ते, "चैतन्यविशिष्टकायः पुरुषः" इति वचनात्, अदृष्टप्रतिपादकप्रमाणाभावाच्च, क एवं मन्यन्ते ? इत्याह—'भूतवादिन' लोकायताः ॥ ३० ॥ तथा—

अचेतनानि भूतानि, न तद्धर्मो न तत्फलम् । चेतनाऽस्ति च यस्येय, स एवात्मेति चापरे ॥ ३१ ॥

अचेतनानि भूतानि, अध्यक्षसत्तयोपलब्धेः, अतो 'न तद्धर्मो' न भूतस्वभावो, 'न तत्फलं' न भूतकार्यं, चेतना अस्ति चेयम् अनुभवसिद्धत्वात्, यस्येयं धर्मः फलं वा स एवात्मेति चापरे—आत्मवादिनो मन्यन्त इति च ॥ ३१ ॥

त एवमाहुः—

**यदीयं भूतधर्मः स्यात्, प्रत्येकं तेषु सर्वदा । उपलभ्येत सत्त्वादिकठिनत्वादयो यथा ॥ ३२ ॥**

यदीयं—चेतना भूतधर्मः 'स्यात्' भवेत् ततः प्रत्येकं 'तेषु' भूतेषु 'सर्वदा' सर्वकालमुपलभ्येत, किंवदित्याह—सत्त्वादिकठिनत्वादयो यथा, सत्त्वादयः सामान्यधर्माः कठिनत्वादयो विशेषधर्माः, न चासौ धर्मो भवन् प्रकारद्वयमतिरिच्य भवति ॥ ३२ ॥ पराभिप्रायमाह—

**शक्तिरूपेण सा तेषु, सदाऽतो नोपलभ्यते । न च तेनापि रूपेण, सत्यसत्येव चेन्न तत् ॥ ३३ ॥**

शक्तिरूपेणादृश्येन 'सा' चेतना तेषु सदा 'अतः' अस्मात्कारणान्नोपलभ्यते, न च तेनापि रूपेण तथाभूतेन 'सती' विद्यमाना 'असत्येव' अविद्यमानैव, चेदिति पराभिप्रायसंसूचकः, यद्येवं मन्यस इति, अत आह—न तत्—नैतदेवमित्यर्थः ॥ ३३ ॥ कथमित्याह—

**शक्तिचेतनयोरैक्यं, नानात्वं वाऽथ सर्वदा(था) । ऐक्ये सा चेतनैवेति, नानात्वेऽन्यस्य सा यतः ॥३४॥**

शक्तिचैतन्ययोः 'ऐक्यम्' अभेदः 'नानात्वं वा' भेदो वाऽथ सर्वथा, किं चातः ? इत्याह—ऐक्ये सा शक्तिश्चेतनैवेति उपलब्धिप्रसङ्गः, नानात्वेऽन्यस्य सा—चेतना प्राप्नोति यतः, न भूतानां, तदन्यशक्तिरूपत्वात्तेषामित्यतो न तदिति योगः ॥ ३४ ॥ सैवानभिव्यक्ता शक्तिरित्येतन्निरासार्थमाह—

अनभिव्यक्तिरप्यस्याः, न्यायतो नोपपद्यते । आवृत्तिर्न यदन्येन, तत्त्वसङ्ख्याविरोधतः ॥ ३५ ॥

अनभिव्यक्तिरप्यस्याः—चेतनायाः 'न्यायतो' नीत्या नोपपद्यते, कथमित्याह—आवृत्तिर्न यदन्येन, अन्यस्यैवाभावात्, अभावश्च तत्त्वसङ्ख्याविरोधतः, पृथिव्यप्तेजोवायुरिति वचनेन तद्व्यतिरिक्तावरणाभावादिति ॥ ३५ ॥

न चासौ तत्स्वरूपेण, तेषामन्यतरेण वा । व्यञ्जकत्वप्रतिज्ञानात्, नावृत्तिर्व्यञ्जकं यतः ॥ ३६ ॥

न चासौ—आवृत्तिः 'तत्स्वरूपेण' भूतस्वरूपेण 'तेषां' भूतानामन्यतरेण वा केनचित्, कुत इत्याह—व्यञ्जकत्वप्रतिज्ञानाद् भूतानां, ततः किमित्याह—'नावृत्तिः' नावारकमेव व्यञ्जकं यतो भवति ॥ ३६ ॥

विशिष्टपरिणामाभावेऽपि चात्रावृतिर्न वै । भावताऽऽवृतेस्तथा नाम, व्यञ्जकत्वप्रसङ्गतः ॥ ३७ ॥

'विशिष्टपरिणामाभावेऽपि' प्राणापानवाक्कायाकारपरिणामाभावेऽपि हि 'अत्र' भूतचेतनायामावृतिः 'न वै' नैव, कुत इत्याह—'भावतावृतेः, तस्या भावश्च(त्वस्य) आवृतेश्च, तुच्छस्याप्यप(साव)योगात्, तथा नाम 'व्यञ्जकत्वप्रसङ्गतः', परिणामस्यैव व्यञ्जकत्वप्रसङ्गात् ॥ ३७ ॥ दोषान्तरमाह—

न चासौ भूतभिन्नो यत्, ततो व्यक्तिः सदा भवेत् । भेदे त्वधिकभावेन, तत्त्वसङ्ख्या न युज्यते ॥३८॥

न चासौ—परिणामो भूतभिन्नो 'यत्' यस्मात् 'ततः' तस्माद् व्यक्तिः सदा भवेत् चैतन्यस्य, भेदे तु परिणामस्याभ्युपगम्यमानेऽधिकभावेन तत्त्वान्तरापत्त्या तत्त्वसङ्ख्या न युज्यते "चत्वार्येव तत्त्वानि" इति ॥ ३८ ॥

पराभिप्रायमाशङ्क्य परिहारमाह—

**स्वकालेऽभिन्न इत्येवं, कालाभावे न सङ्गतम्। लोकसिद्धाश्रये त्वात्मा, हन्त! नाश्रीयते कथम् ?॥३९॥**

'स्वकाले' तथाविधपरिणामभवनसमयेऽभिन्नोऽसावित्येतत् कालाभावे न सङ्गतं, नच कालो नाम तत्त्वान्तरमिष्यते परैः, 'लोकसिद्धाश्रये' लोकसिद्धस्य कालस्याश्रये पुनः क्रियमाणे आत्मा हन्त! नाश्रीयते कथं?, तस्यापि लोकसिद्धत्वादित्यभिप्रायः ॥ ३९ ॥ एतदेवाह—

**नात्माऽपि लोके नो सिद्धो, जातिस्मरणसंश्रयात्। सर्वेषां तदभावश्च, चित्रकर्म्मविपाकतः ॥ ४० ॥**

नात्माऽपि लोके नो सिद्धः, किन्तु सिद्ध एव, कुत इत्याह-'जातिस्मरणसंश्रयात्', लोकेनाङ्गीकरणात्, 'सर्वेषां' प्राणिनां 'तदभावश्च' जातिस्मरणाभावश्च जात्यन्तरादागमने सत्यपि चित्रकर्म्मसामर्थ्यात् ॥ ४० ॥

एतदेव समर्थयन्नाह—

**लोकेऽपि नैकतः स्थानादागतानां तथेक्ष्यते। अविशेषेण सर्वेषामनुभूतार्थसंस्मृतिः ॥ ४१ ॥**

लोकेऽपि नैकतः 'स्थानात्' नगरादेः आगतानां प्राणिनां तथेक्ष्यते-दृश्यते अविशेषेण सर्वेषामनुभूतार्थसंस्मृतिः, यथा कस्यचिज्जातिस्मरणप्रत्यक्षस्य पटुमतेः, तथाऽपि तेषामविशिष्टा सा ईक्ष्यत एवेति चेत्, न, नष्टचित्तादिभिर्व्यभिचारात्,

स्रोकास्तथाभूता इति, सम्भयस्तायत्तिन्न, ते तु कर्मदोषतो यद्य इति को दोषः?, कृतं प्रसङ्गेन, गमनिकामात्रत्वात् प्रयासस्य ॥ ४१ ॥ उपपत्त्यन्तरमाह—

दिव्यदर्शनतश्चैव, तच्छिष्टाव्यभिचारत । पितृकर्मादिसिद्धेश्च, हन्त नात्माऽप्यलौकिक ॥ ४२ ॥

दिव्यदर्शनतश्चैव, कश्चिद्मानुपोपलब्धेश्च पात्रावसारादौ, 'तच्छिष्टाव्यभिचारतः' तत्कथिताविसंवादात्, 'पितृकर्मादिसिद्धेश्च' पितृकर्मविषदर्शनाच्च लोके हन्त! नात्माऽप्यलौकिकः, हन्त सम्प्रेषु(प)णे, किन्तु लौकिक एव, उक्तः शक्तिपक्षः ॥ ४२ ॥ कार्यपक्षमधिकृत्याह—

काठिन्याबोधरूपाणि, भूतान्यध्यक्षसिद्धितः । चेतना तु न तद्रूपा, सा कथ तत्फल भवेत् ? ॥ ४३ ॥

काठिन्याबोधरूपाणि, काठिन्यग्रहण मा(म्र)वोष्णाद्युपलक्षण, 'भूतानि' पृथिव्यादीनि 'अध्यक्षसिद्धितः' तथाप्रत्यक्षो-पलब्धेः, चेतना तु न 'तद्रूपा' काठिन्याबोधस्वभावा, सा कथं 'तत्फलं' भूतकार्य भवेत्?, नैवेत्यभिप्रायः ॥ ४३ ॥ दोषान्तरमाह—

प्रत्येकमसती तेषु, न च स्याद्रेणुतैलवत् । सती चेदुपलभ्येत, भिन्नरूपेषु सर्वदा ॥ ४४ ॥

प्रत्येकमसती चेतना 'तेषु' भूतेषु न च स्यात्समुदायेऽपि, रेणुतैलवत्, सती चेत् प्रत्येकमियमुपलभ्येत तेषु भिन्न-रूपेषु सर्वदा ॥ ४४ ॥ पराभिप्रायमाह—

असत्स्थूलत्वमण्वादौ, घटादौ दृश्यते यथा । तथाऽसत्येव भूतेषु, चेतनाऽपीति चेन्मतिः ॥ ४५ ॥
नासत्स्थूलत्वमण्वादौ, तेभ्य एव तदुद्भवात् । असतस्तत्समुत्पादो, न युक्तोऽतिप्रसङ्गतः ॥ ४६ ॥
पञ्चमस्यापि भूतस्य, तेभ्योऽसत्त्वाविशेषतः । भवेदुत्पत्तिरेवं च, तत्त्वसङ्ख्या न युज्यते ॥ ४७ ॥

असत्स्थूलत्वमण्वादौ, आदिशब्दाद् द्व्यणुकादिपरिग्रहः, 'घटादौ' तत्समुदये दृश्यते यथा तथा असत्येव भूतेषु प्रत्येकं तत्समुदाये चेतनाऽपीति चेन्मतिः ॥ ४५ ॥ अत्राह—'नासदि'त्यादि, नासत् स्थूलत्वमण्वादौ, किन्तु सदेव, कुत इत्याह—तेभ्य एव समुद्भवात् स्थूलत्वस्य, केयमुपपत्तिः? इत्याह—'असतः' स्थूलत्वस्य 'तत्समुत्पादः' तेभ्योऽण्वादिभ्यः सम्भवो न युक्तः, कस्मादित्याह—अतिप्रसङ्गतः इति ॥ ४६ ॥ एतदेवाह—'पञ्चमे'त्यादि, पञ्चमस्यापि 'भूतस्य' आकाशादेः 'तेभ्यः' अण्वादिभ्यः 'असत्त्वाविशेषतः' चैतन्यवदसत्त्वाविशेषात् भवेदुत्पत्तिरिति, एवं चाभ्युपगम्यमाने तत्त्वसङ्ख्या न युज्यते "चत्वार्येव तत्त्वानी"ति ॥ ४७ ॥ पराभिप्रायमाह—

न तज्जननस्वभावाश्चेत्तेऽत्र[1] मानं[2] न विद्यते । स्थूलत्वोत्पाद इष्टश्चेत्तत्सद्भावेऽप्यसौ समः ॥ ४८ ॥

'न तज्जननस्वभावाश्चेत्ते' न पञ्चमभूतजननस्वभावाश्चेदण्वादय इत्याशङ्क्याह—अत्र मानं न विद्यते, यदुत न इत्थम्भूतानि, स्थूलत्वोत्पाद इष्टश्चेत् अतज्जननस्वभावेभ्यस्तदुत्पादविरोधे न मानम्, एतदाशङ्क्याह—'तत्सद्भावेऽपि' कथञ्चि-

---

1 तज्जननस्वभावा नेत्यत्रेति मु   2 ०श्चेत्यत्रेति पु.

स्थूल(त्व)सद्भावेऽपि अण्वादिषु 'असौ' स्थूलत्वोत्पादः 'सम' तुल्य एव, अन्यथाऽतज्जननस्वभावेनातिप्रसङ्गानिवृत्तिः ॥ ४८ ॥ तपचयमाह—

न च मूर्त्ताणुसङ्घातभिन्नं स्थूलत्वमित्यद । तेषामेव तथाभावो, न्याय्य मानाविरोधतः ॥ ४९ ॥

न च मूर्त्ताणुसङ्घाताभिन्नं स्थूलत्वम्, अपितु तत्सङ्घात एव, तेषां तथास्वभावत्वात्, विप्रकृष्टसन्निकृष्टेषु रेण्वादिष्वनेकत्वपरिणामसिद्धेः स्वभावभेदेनोपलम्भात्, तेष्वपि तथाकल्पनाऽविरोधाच्च, रेण्वाद्यनेकत्वस्यापि कैश्चिदनुपलब्धेः, तेषामपि कैश्चिदुपलम्भात्, स्थूलत्वोपलब्ध्यन्यथानुपपत्तेः, तदनिमित्तत्वे सदाभावप्रसङ्गात् इत्येवमतः—एतत् स्थूलत्वं तेषामेवाणूनां 'तथाभाव' कथञ्चिदेकत्वपरिणामो न्याय्यं—घटमानकं, कुत इत्याह—'मानाविरोधतः' तत्त्वतप्रमाणाविरोधादिति ॥ ४९ ॥ इत्थं चैतदङ्गीकर्त्तव्यमित्याह—

भेदे तदद्ल यस्मात्, कथं सद्भावमश्नुते? । तदभावेऽपि तद्भावे, सदा सर्वत्र वा भवेत् ॥ ५० ॥

भेदे अण्वादिभ्यः 'तत्' स्थूलत्वम् 'अदलम्' अनुपादानं यस्मात्कथं सद्भावमश्नुते?, नैव सत्तां प्राप्नोतीत्यर्थः, तदभावेऽपि 'तद्भावे' तत्स्थूलत्वभावे तत्त्वतोऽनुपादानत्वेन 'सदा' सर्वकालं सर्वत्र वा क्षेत्रे भवेत् स्थूलत्वम्, असत्त्वाविशेषेण नियामकाभावात्, तदाऽपि किञ्चिदसदेव भवति नियमवच्च तदित्येवमप्यदोष इति चेत्, ननु किं तद्भवतीति वाच्यं, प्रत्येकमणुस्थूलत्वमिति चेत्, न तत्सर्वथाऽसत्, तेषामेव तथाभावात्, तथाभवनमपि न प्रत्येकभावेन, प्रत्येकत्वविरो-

धादिति चेत्, न, तेषां तथास्वभावत्वेन सर्वथा नेत्यसिद्धेः, तथास्वभावत्वे प्रत्येकत्ववत्तदैव सद्भावप्रसङ्ग इति चेत्, न, तथास्वभावत्वेन विचित्रस्वभावाक्षयादिति, मूर्ताणुसङ्घात एव स्थूलत्वमिति ॥ ५० ॥

**न चैवं भूतसङ्घातमात्रं चैतन्यमिष्यते । अविशेषेण सर्वत्र, तद्वत्तद्भावसङ्गतेः ॥ ५१ ॥**

न चैवम्—अणुस्थूलत्ववद् भूतसङ्घातमात्रं चैतन्यमिष्यते परैः, कुत इत्याह—अविशेषेण 'सर्वत्र' भूतसङ्घाते 'तद्वत्' तत्सङ्घातवदेव तद्भावसङ्गतेः—चैतन्यभावप्रसङ्गात् ॥ ५१ ॥ ततः किमित्यत आह—

**एवं सति घटादीनां, व्यक्तचैतन्यभावतः । पुरुषान्न विशेषः स्यात्, स च प्रत्यक्षबाधितः ॥ ५२ ॥**

एवं सति घटादीनां भूतसङ्घातत्वेन व्यक्तचैतन्यभावतः कारणात् पुरुषाद्यविशेषः स्यात्, ततः किमित्याह—स च प्रत्यक्षबाधितः, तेषामचेतनत्वेन प्रतीतेः ॥ ५२ ॥ पराभिप्रायमाह—

**अथ भिन्नस्वभावानि, भूतान्येव यतस्ततः । तत्सङ्घातेषु चैतन्यं, न सर्वेष्वेतदप्यसत् ॥ ५३ ॥**

अथ भिन्नस्वभावानि प्रकृत्यैव भूतान्येव यतस्ततः कारणात्तत्सङ्घातेषु केषाञ्चिदेव (चेतना, केषाञ्चिदेव) तज्जननस्वभावत्वादित्येतदाशङ्क्याह—एतदप्यसत्—अशोभनमित्यर्थः ॥ ५३ ॥ कथमित्याह—

**स्वभावो भूतमात्रत्वे, सति न्यायान्न भिद्यते । विशेषणं विना यस्मान्न तुल्यानां विशिष्टता ॥ ५४ ॥**

'स्वभावः' तदा सत्तारूपः भूतमात्रत्वे सति तदतिरिक्तभेदकाभावेन स्यायाश्च भिद्यते, कथमित्याह–विशेषणं विना यस्माल्लोके न तुल्यानां समञ्जसपयदीनां विशिष्टता, तथाऽप्रतीतेः ॥ ५४ ॥ स्वरूपमात्रभेदपक्षमाश्रित्याह—

स्वरूपमात्रभेदे च, भेदो भूतेतरात्मकः । अन्यभेदकभावे तु, स एवात्मा प्रसज्यते ॥ ५५ ॥

स्वरूपमात्रभेदेऽपि च–स्वरूपमात्रेण च भूतानां भेदेऽभ्युपगम्यमाने सति भेदो भूतेतरात्मको भवति, भेदमात्रस्य चैतन्यजननस्वभावेष्वपि भावात्, तदन्येषां च स्वरूपेणैव तेभ्यो भेदात्, स्वरूपस्य चोभयत्र भूतमात्रस्वभावत्वादिति । 'अन्यभेदकभावे तु' अन्यस्य भेदकस्यास्तित्वे पुनरभ्युपगम्यमाने, समानशुक्लपटेषु रागादेरिव, किमित्याह–स एवान्यो भेदक आत्मा प्रसज्यते, तदतिरिक्तस्वभावत्वादिति ॥ ५५ ॥ पराभिप्रायमाह—

दधिगुडकणिकादिद्रव्यसङ्घातजान्यपि । यथा भिन्नस्वभावानि, स्वाद्यकानि तथेति चेत् ॥ ५६ ॥
व्यक्तिमात्रत एवैषां, ननु भिन्नस्वभावता । रसवीर्यविपाकादिकार्यभेदो न विद्यते ॥ ५७ ॥
तदात्मकस्वमात्रत्वे, सत्स्थानादिविलक्षणा । यथेयमस्ति भूतानां, तथा साऽपि कथं न चेत् ॥ ५८ ॥
कर्मभावात्तथा देशकालभेदाद्ययोगत । न चासिद्धमदो भूतमात्रत्वे तदसम्भवात् ॥ ५९ ॥
तथा च भूतमात्रत्वे, न तत्सङ्घातभेदयो । भेदकाभावतो भेदो, युक्तः सम्यग् विचिन्त्यताम् ॥६०॥

'हविर्गुडकणिकादिद्रव्यसङ्घातजान्यपि' हविः—घृतम्, आदिशब्दाच्चातुर्जातकादिपरिग्रहः, यथा भिन्नस्वभावानि 'खाद्यकानि' अशोकवर्त्तिमरिचमञ्जर्यादीनि तथेति ॥ ५६ ॥ एवं चेद्भूतकार्याणि देहघटादीनि चेतनत्वाचेतनत्वेन भिन्नस्वभावानीति, आह—'व्यक्ती'त्यादि, व्यक्तिमात्रत एवैषां—खाद्यकानां ननु भिन्नस्वभावता, रसवीर्यविपाकादिकार्यभेदो न विद्यते, तद्वत्तत्रापि स्वभावभेदो मा भूदित्यभिप्रायः ॥ ५७ ॥ पराभिप्रायमाह—'तदात्मकत्वमात्रत्वे' हविर्गुडकणिकादिद्रव्यसङ्घातात्मकमात्रत्वे सति संस्थानादिविलक्षणा, आदिशब्दात्परिमाणादिपरिग्रहः, यथेयमस्ति भिन्नस्वभावता खाद्यकानां 'भूताना'मिति भूतकार्याणां देहघटादीनां 'साऽपि' भिन्नस्वभावता चेतनत्वाचेतनत्वरूपा कथं न?, चेत्, स्यादेवेत्यर्थः ॥ ५८ ॥ अत्रोत्तरमाह—'कर्त्रे'त्यादि, कर्त्रभावात्, नहि खाद्यकानामिव तदतिरिक्तो भूतदेहघटादीनां कर्त्ताऽस्ति, तथा 'देशकालभेदाद्ययोगतः' देशभेदायोगात्, कालभेदायोगात्, अदृष्टभेदायोगादिति, न चासिद्धमदः—देशभेदाद्ययोगादि, कुतः? इत्याह—भूतमात्रत्वे विश्वस्य 'तदसम्भवात्' देशाद्यसम्भवादिति (कर्त्राद्यसंभवात् न्याय०) ॥५९॥ एतदेव स्पष्टयन्नाह—'तथा चे'त्यादि, तथा च भूतमात्रत्वे विश्वस्य न 'तत्सङ्घातभेदयोः' भूतसङ्घातविशेषयोर्देहघटादिरूपयोः भेदकाभावतः कारणाद् 'भेदः' चेतनेतरादिरूपो युक्तः, सम्यग् विचिन्त्यतामेतदिति ॥ ६० ॥ तत्रापि विशेषमाह—

एकस्तथाऽपरो नेति, तन्मात्रत्वे तथाविधः । यतस्तदपि नो भिन्नं, ततस्तुल्यं च तत्तयोः ॥ ६१ ॥

स्यादेतद् भूतजत्वेऽपि, ग्रावादीनां विचित्रता । लोकसिद्धेति सिद्धैव, न सा तन्मात्रजा ननु ॥ ६२ ॥

अदृष्टाकाशकालादिसामग्रीतः समुद्भवात् । तथैव लोकसंवित्तेरन्यथा तदभावतः ॥ ६३ ॥

न चेह लौकिको मार्गः स्थितोऽस्माभिर्विचार्यते । किन्त्वयं युज्यते केति, स्वनीतौ चोक्तवांश्च सः ॥६४॥

'एकः' भूतसङ्घातो देहादिरूपः 'तथा' देहादिरूपत्वेन, 'अपर' घटादिरूपो नेति, 'तन्मात्रत्वे' भूतसङ्घातमात्रत्वे तुल्ये सति 'तथाविध' देहादिरूपो नेति, 'यत' यस्माभिर्भिन्नं नो भिन्नं 'तत' भूतमात्रात्, अपि तु तदेव तदिति, तुल्यं च 'तद्' भूतमात्रत्वं 'तयो' भूतसङ्घातयोर्देहघटादिरूपयोरिति वैचित्र्याभावः ॥ ६१ ॥ 'स्यादेत'दित्यादि, तथैवं मन्यसे—भूतत्वेऽपि सति 'ग्रावादीनाम्' उपलादीनां विचित्रता वर्णादिभेदेन लोकसिद्धेति, तथाप्रतीतेः, एतदाशङ्क्याह—सिद्धैव, न लोकप्रतीतिरपह्नूयते, किन्तु न 'सा' ग्रावादीनां विचित्रता तन्मात्रभवा ननु ॥ ६२ ॥ कथमित्याह—'अदृष्टे'त्यादि, अदृष्टाकाशकालनियत्यादीनां या सामग्री ततः 'समुद्भवात्' उत्पत्तेर्ग्रावादिविचित्रतायाः, कुत इत्याह—'तथैव लोकसंवित्ते' रित्यमेव सकललोकसिद्धत्वात्, 'अन्यथा' यद्येवं नेष्यते ततः 'तदभावतः' इति ग्रावादिविचित्रताऽभावात्, भूतमात्रत्वेन निमित्ताविशेषात् ॥ ६३ ॥ किं वाऽनेन निदर्शनेन ? इत्याह—'न चेहे'त्यादि, न चेह—प्रक्रमे 'लौकिको मार्गः' ग्रावादिविचित्रतारूपः स्थितोऽस्माभिर्विचार्यते, किमयमित्थं स्थितः ? इति, किन्त्वयं युज्यते केत्येतद्विचार्यते, 'स्वनीतौ च' भूतमात्रनिमित्तरूपायाम् उक्तवांश्च सः—मार्गः, निमित्ताविशेषादिति ॥ ६४ ॥ पराभ्युपगमे दोषान्तरमाह—

मृतदेहे च चैतन्यमुपलभ्येत सर्वथा । देहधर्मादिभावेन, तन्न धर्मादि नान्यथा ॥ ६५ ॥

'मृते'त्यादि, मृतदेहे च 'चैतन्यं' चेष्टादिहेतुरूपमुपलभ्येत 'सर्वथा' सर्वप्रकारैः, कुतः? इत्याह—'देहधर्मादिभावेन' देहधर्मत्वेन देहकार्यत्वेन च, इदं (त्थं) चैतदङ्गीकर्त्तव्यं, तच्चैतन्यं (न) 'तद्धर्मादि' देहधर्मो देहकार्यं वा, नान्यथा, तद्भावेऽप्यभावादिति भावः ॥ ६५ ॥ इहैव व्यभिचारमाशङ्क्य परिहरन्नाह—

न च लावण्यकार्कश्यश्यामत्वैर्व्यभिचारिता । मृतदेहेऽपि सद्भावाद्ध्यक्षेणैव सङ्गतेः ॥ ६६ ॥
न चेल्लावण्यसद्भावो, न स तन्मात्रहेतुकः । अत एवान्यसद्भावादस्त्यात्मेति व्यवस्थितम् ॥ ६७ ॥
न प्राणादिरसौ, मानं किं?, तद्भावेऽपि तुल्यता । तदभावादभावश्चेदात्माभावे न का प्रमा? ॥६८॥
तेन तद्भावभावित्वं, न भूयो नलिकादिना । संपादितेऽप्यतत्सिद्धेः, सोऽन्य एवेति चेद् न तत् ॥६९॥
वायुसामान्यसंसिद्धेस्तत्स्वभावः स नेति चेत् । अत्रापि न प्रमाणं वश्चैतन्योत्पत्तिरेव चेत् ॥ ७० ॥
न तस्यामेव सन्देहात्तवायं केन नेति चेत् । तत् तत्स्वरूपभावेन, तदभावः कथं नु चेत्? ॥ ७१ ॥
तद्वैलक्षण्यसंवित्तेः, मातृचैतन्यजे ह्ययम् । सुते तस्मिन्न दोषः स्यान्न न भावेऽस्य मातरि ॥ ७२ ॥
न च संस्वेदजाद्येषु, मात्रभावेन तद्भवेत् । प्रदीपज्ञातमप्यत्र, निमित्तत्वात् न बाधकम् ॥ ७३ ॥

इत्थं न तदुपादानं, युज्यते तस्य कस्यचन । अन्योपादानभावे च, तदेवात्मा प्रसज्यते ॥ ७४ ॥

नच लावण्यकार्कश्यश्यामत्वैर्देहधर्मादित्वे सति तद्भावाभावत्वेन व्यभिचारिता, कुतः? इत्याह—मृतदेहेऽपि
तद्भावात्, लावण्यादीनां तद्भावस्याप्यभेदेनैव 'सततं' परिच्छेदात् ॥ ६६ ॥ असिद्धमाशङ्क्य परिहरति—'न चे'
त्यादि, न चेल्लावण्यसद्भावो मृतदेहे तथाऽनुपलम्भेनेत्यत्राह—'स' लावण्यसद्भावः 'तन्मात्रहेतुकः' देहमात्रनिमित्तः
यदि स्याद् भवेदेव, देहभावाविशेषात्, न चैवम्, एवं चैतन्येऽपि योजनीयम्, अत एव तद्भावात् कारणादन्यस
भावः, यदेकस्याछावण्याभावस्य चैतन्याभाव इत्येवमन्यसद्भावादस्यास्तीति व्यवस्थितम् ॥ ६७ ॥ तदन्यस्यैवात्मत्वाभ्युपग
न्तमेवाधिकृत्याह—'ने'त्यादि, न प्राणादिः, आदिशब्दात्परिणामभेदः, 'असौ' अन्य इति, यदेकस्याभावेऽन्याभाव इत्यत्र
मानं किं?, न किञ्चिदित्यर्थः, परस्य आह—'तद्भावेऽपि युज्यता', प्राणादिरेवासावित्यत्रापि मानं किमिति भावः,
'तद्भावात्' प्राणाद्यभावाद्भावश्चेतनाया यदि मानम्, अत्राह—आत्माभावे न स चैतन्याभाव इत्यत्र 'का प्रमा' किं
नर्द्धिमद्विना, आदिशब्दाद् वस्त्वादिग्रहः, संपादितेऽपि वायौ प्राणादिरूपे 'अतस्त्वसिद्धे' इति चैतन्यासिद्धेः, 'स' नर्द्धि
कादिवायुरन्य एवेति चेत्, न प्रमाणादि(प्राणादि०)रिति, अत्राह—न तदित्यादि ॥ ६९ ॥ 'वायु' इत्यादि, वायुसामा
न्यसिद्धेरिति, 'तत्स्वभावः' चैतन्यजननस्वभावः 'स' नर्द्धिकादिवायुर्नेति चेत्, अत्र हि—अत्रापि न प्रमाणं युज्मा
कम्, अप्रत्यक्षत्वादिति, चैतन्योत्पत्तिरेव चेत्प्रमाण, प्राणादिभावे तदुत्पत्तेः, प्राणादेरेव तत्स्वभावत्वावगमात् ॥ ७० ॥

नेत्यादिना परिहरति–न 'तस्यामेव' चैतन्योत्पत्तौ सन्देहात्, प्राणादिकार्यत्वेनात्मधर्मादित्वमङ्गीकृत्य चैतन्यस्य तवायं–सन्देहः 'केन' मानेन नेति चेत्, अत्राह–तस्य चैतन्यस्य 'तत्स्वरूपभावेन' आत्मरूपभावेन–आत्मस्वरूपत्वेन, 'तद्-भावः' चैतन्यस्य प्राणादिसारूप्याभावः कथं नु चेत्? ॥ ७१ ॥ अत्राह—'तद्वैलक्षण्ये'त्यादि, भूतवैलक्षण्येन संवेद-नात् चैतन्यस्य, पराभिप्रायमाह—'मातृचैतन्यजे ह्ययं–हेतुसारूप्याभावलक्षणः, सुते 'तस्मिन् न' चैतन्येऽभ्युपगम्य-माने न दोषः स्यात्, तत्रोत्तरं–न नेति, किन्तु दोष एव, भावेऽस्य चैतन्यस्य, क्व? मातरि, मृद्घटवत्तज्जत्वासिद्धेः ॥७२॥ दोषान्तरमाह—'न चे'त्यादि, न च 'संस्वेदजाद्येषु' यूकाद्येषु मात्रभावेन चैतन्यं भवेत्, पराभिप्रायमाशङ्क्य परिहरति –प्रदीपोदाहरणमपि, भाव एव दीपाद्दीपान्तरमुत्पद्यते इत्येतदत्र–मातृचैतन्यजप्रक्रमे निमित्तत्वाद्दीपस्य तदपरदीपोत्पत्तौ न बाधकं, न च दीप एव दीपान्तरस्योपादानमिति प्रतीतम् ॥७३॥ 'इत्थ'मित्यादि, 'इत्थम्' एवं उक्तन्यायात् 'न तदु-पादानं' न मातृचैतन्योपादानं युज्यते 'तत्' सुतचैतन्यं कथञ्चन, अथ मा भूदेष दोष इत्यन्यत्तदिष्यत इत्यत्राह–अन्यो-पादानभावे चाधिकृतचैतन्यस्य, किमित्यत्राह—'तदेव' उपादानम् आत्मा प्रसज्यते, असारूप्येण भूतेभ्योऽन्यत्वादिति ॥ ७४ ॥ न चानुपादानं किं (न) भवति? इत्याह—

न तथाभाविनं हेतुमन्तरेणोपजायते । किञ्चिन्नश्यति चैकान्ताद्, यथाऽऽह व्यासमहर्षिः[1] ॥ ७५ ॥

नासतो विद्यते भावो, नाभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ ७६ ॥

---

१ छन्द प्रतिलोमताऽत्र आर्षत्वात् न दोषायेति न्यायाचार्याः । तथैव ४८ तमेऽपि

नाभावो भावमाप्नोति, शशश्रृङ्गे तथागते । भावो नाभावमेतीह, दीपश्चेन्न स सर्वथा ॥ ७७ ॥
एवं चैतन्यवानात्मा, सिद्धः सततभावतः । परलोक्यपि विज्ञेयो, युक्तिमार्गानुसारिभिः ॥ ७८ ॥

न 'तथाभाविनं' कार्यरूपतया भवनशीलं हेतुम् 'अन्तरेण' विना उपजायते 'किञ्चित्' किमपि, अप्रत्य(सी)-मेयासत्वसमावयिरोधात्, तथा नश्यति चैकान्तात्, सतोऽसत्त्वानापत्तेः, यथाऽऽह व्यासमहर्षिरित्यनेनार्थमेव शिष्टाभ्युपगम इत्याह ॥७६॥ 'नासत' इत्यादि, नासतः—खरविषाणादेर्विद्यते भावो, नाभावो विद्यते 'सतः' पृथिव्यादेः, उभयोरपि दृष्टोऽन्तः—परिच्छेदः 'अनयो' सदसतोस्तत्त्वदर्शिभिरिति ॥७६॥ तथा परेणाप्येतदेवोक्तमित्याह—'नाभाव' इत्यादि, 'नाभाव' तुच्छो भावतां याति, कुतः? इत्याह—शशश्रृङ्गे तथागतेः, न हि तदसत् कदाचित्सत्त्वमापद्यते, तथा 'भाव' वस्तुरूपः नाभावमेतीह सर्वथा, प्रकृत्यपगमायोगात्, दीपश्चेद(दभा)वमेति, अत्राह—न सर्वथाऽभावः, भास्वरपुद्गलानां तमस्त्वपरिणतेरिति ॥ ७७ ॥ उपसंहरन्नाह—'एव'मित्यादि, 'एवम्' उक्तेन प्रकारेण चैतन्यवानात्माभूतव्यतिरिक्तः सिद्धः, स च 'सततभावत' उक्तवत्सततभवनेन परलोक्यपि विज्ञेयः, अन्वयोपपत्तेः, कैरित्याह—'युक्तिमार्गानुसारिभिः', नान्यतो भिन्नजातीयमेव अन्यथा तद् भवति अतिप्रसङ्गादिति तत्त्वदर्शिभिः ॥ ७८ ॥ अत्राह—

सतोऽस्य किं घटस्येव, प्रत्यक्षेण न दर्शनम्? । अस्त्येव दर्शनं स्पष्टमहंप्रत्ययवेदनात् ॥ ७९ ॥

'सत' इत्यादि, सतोऽस्य–आत्मनः किं घटस्येव प्रत्यक्षेण न दर्शनम्?, अत्रोच्यते–अस्ति च दर्शनं 'स्पष्टं' स्फुटम् 'अहंप्रत्ययवेदनात्' अनुभूतेः ॥ ७९ ॥ पराभिप्रायमाह—

**भ्रान्तोऽहं गुरुरित्येषः, सत्यमन्यस्त्वसौ मतः । व्यभिचारित्वतो नास्य, गमकत्वमथोच्यते ॥ ८० ॥**
**प्रत्यक्षस्यापि तत्त्याज्यं, तत्सद्भावाविशेषतः । प्रत्यक्षाभासमन्यच्चेत्, व्यभिचारि न साधु तत् ॥ ८१ ॥**

'भ्रान्त' इत्यादि, भ्रान्तोऽहं गुरुरित्येषोऽहंप्रत्ययः, आत्मनो गुरुत्वायोगाद्, अत्राह–सत्यम्–एवमेतत्, किन्त्वन्यस्त्वसौ मतः, आत्मविषयोऽहंप्रत्ययः केवल एव, अनिष्टमाशङ्क्य परिहरति–व्यभिचारित्वतो न 'अस्य' अहंप्रत्ययस्य गमकत्वमथोच्यते, मेयत्वादेरिव ॥ ८० ॥ अत्रोत्तरम्—'प्रत्यक्षे'त्यादि, प्रत्यक्षस्यापि 'तद्' गमकत्वं त्याज्यं, कुत इत्याह—'तत्सद्भावाविशेषतः' व्यभिचारित्वसद्भावाविशेषात्, द्विचन्द्रादिप्रत्यक्षस्यापि भ्रान्तत्वात्, प्रत्यक्षाभासमन्यच्चेत्, प्रत्यक्षादर्थान्तरभूतं, 'व्यभिचारि, न साधु तत्' न प्रत्यक्षं तदित्यर्थः ॥ ८१ ॥ अत्रोत्तरमाह—

**अहंप्रत्ययपक्षेऽपि, ननु सर्वमिदं समम् । अतस्तद्वदसौ मुख्यः, सम्यक् प्रत्यक्षमिष्यताम् ॥ ८२ ॥**

'अह'मित्यादि, अहंप्रत्ययपक्षेऽपि मयोपन्यस्ते ननु सर्वमिदं 'समं' तुल्यं, न साधुरसावन्यः–तदाभासोऽहंप्रत्ययः, यतश्चैवमतस्तत्प्रत्ययवद् 'असौ' अहंप्रत्ययो मुख्यः, किं? सम्यक् प्रत्यक्षमिष्यताम्, आत्मपरिच्छेदक इति भावः ॥८२॥ स एवमन्यो नेतरः इत्येतदाह—

गुर्वी मे तनुरित्यादौ, भेदप्रत्ययदर्शनात्। भ्रान्ततामिमतस्यैव, सा युक्ता नेतरस्य तु ॥ ८३ ॥

'गुर्वी'त्यादि, गुर्वी मे तनुरित्यादौ, आदिशब्दाद्गौरी चेति परिग्रहः, अत्र भेदप्रत्ययदर्शनाच्छरीरे, यत्त्वैषमतः भ्रान्तताऽभिमतस्यैव—अहं गुरुरित्याद्यहंप्रत्ययस्य 'सा' भ्रान्तता युक्ता, नेतरस्य तु—तद्भेदप्रत्ययनिबन्धनस्य केवलाहंप्रत्ययस्य ॥ ८३ ॥ न चास्य स्वसंविदितत्व (स्य) विरुध्यत इत्येतदाह—

आत्मनाऽऽत्मग्रहोऽप्यत्र, तथानुभवसिद्धितः। तस्यैव तत्स्वभावत्वात्, न तु युक्त्या न युज्यते ॥ ८४ ॥

'आत्मने'त्यादि, आत्मनाऽऽत्मग्रहोऽप्यत्र कर्तृकर्मभावेन 'तथाऽनुभवसिद्धितः' अहंप्रत्ययवेदनादित्यर्थः, 'तस्यैव' आत्मनः 'तत्स्वभावत्वात्' स्वग्रहणस्वभावत्वात्, न तु युक्त्या न युज्यते, किन्तु युज्यत एव, स्वभाववैचित्र्यादिति ॥ ८४ ॥ पराभिप्रायमाशङ्क्य परिहरति—

न च बुद्धिविशेषोऽयमहङ्कारः प्रकल्प्यते। दानादिबुद्धिकालेऽपि, तथाऽहङ्कारवेदनात् ॥ ८५ ॥

'न चे'त्यादि, न च बुद्धिविशेषोऽयमहङ्कारः प्रकल्प्यते, नीलादिबुद्धिवत्, कुतः ? इत्याह—दानादिबुद्धिकालेऽपि तथाऽहङ्कारवेदनात्, तथेति अहं ददामि करोमीति, अतः सामर्थ्यवेदनादिति ॥ ८५ ॥ अनिष्टान्तरापत्तिं परिहरन्नाह—

आत्मनाऽऽत्मग्रहे तस्य, तत्स्वभावत्वयोगतः। सदैवाग्रहणं चैव, विज्ञेयं कर्मदोषतः ॥ ८६ ॥

'आत्मने'त्यादि, आत्मनाऽऽत्मग्रहे सत्यपि 'तस्य' आत्मनः 'तत्स्वभावत्वयोगतः' आत्मना ग्रहणस्वभावत्वयो

गात्, सदैवाग्रहणं स्पष्टम्, आत्मन एव एवं विज्ञेयं 'कर्म्मदोषतः' तथाप्रतिबन्धकज्ञानावरणापराधेनेति ॥ ८६ ॥ उपसंहरन्नाह—

अतः प्रत्यक्षसंसिद्धः, सर्वप्राणभृतामयम्। स्वयंज्योतिः सदैवात्मा, तथा वेदेऽपि पठ्यते ॥ ८७ ॥

'अत' इत्यादि, अतः प्रत्यक्षसंसिद्धः, अहंप्रत्ययग्राह्यत्वेन, सर्वप्राणभृतामयमात्मा, स्वयंज्योतिः सदैवात्मा, तथा वेदेऽपि पठ्यते—"आत्मज्योतिरेवायं पुरुषः" इति वचनात् ॥ ८७ ॥ वार्त्तान्तरमाह—

अत्रापि वर्णयन्त्येके, सौगताः कृतबुद्धयः। क्लिष्टं मनोऽस्ति यन्नित्यं, तद्यथोक्तात्मलक्षणम् ॥ ८८ ॥

'अत्रापी'त्यादि, 'अत्रापि' आत्मविचारे वर्णयन्त्येके 'सौगताः' बौद्धाः 'कृतबुद्धयः' परिताः (परिष्कृतमतयः), किमित्याह—क्लिष्टं मनोऽस्ति यन्नित्यमालयादिरूपं तद्यथोक्तात्मलक्षणं, तत एवेत्थं व्यवहारः सिद्धः ॥ ८८ ॥ अन्यस्त्वाह—

यदि नित्यं तदाऽऽत्मैव, सञ्ज्ञाभेदोऽत्र केवलम्। अथानित्यं ततश्चेदं, न यथोक्तात्मलक्षणम् ॥ ८९ ॥

यः कर्त्ता कर्म्मभेदानां, भोक्ता कर्मफलस्य च। संसर्त्ता परिनिर्वाता, स ह्यात्मा नान्यलक्षणः ॥९०॥

आत्मत्वेनाविशिष्टस्य, वैचित्र्यं तस्य यद्वशात्। नरादिरूपं तच्चित्रमदृष्टं कर्म्मसञ्ज्ञितम् ॥ ९१ ॥

तथा तुल्येऽपि चारम्भे, सदुपायेऽपि यो नृणाम्। फलभेदः स युक्तो न, युक्त्या हेत्वन्तरं विना ॥९२॥

तस्मादवश्यमेष्टव्यमत्र हेत्वन्तर परै । तदेवादृष्टमित्याहुरन्ये शास्त्रकृतश्रमा ॥ ९३ ॥
भूताना तत्स्वभावत्वादयमित्यप्यनुत्तरम् । न भूतात्मक एवात्मेत्येतदत्र निदर्शितम् ॥ ९४ ॥
कर्मणो भौतिकत्वेन, यद्वैतदपि साम्प्रतम् । आत्मनो व्यतिरिक्त तत्, चित्रभाव यतो मतम् ॥९५॥

'यदी'त्यादि, यदि नित्य क्लिष्ट मनः सदाऽऽत्मैव तत्त्वतः, सञ्ज्ञामेदोऽत्र केवलं मन आत्मेति च, अथानित्यमिष्यते तत् तदात्मनो न यथोक्तात्मलक्षणं, क्षणमेदादिति ॥८९॥ एतदेवाह—यः कर्त्ता 'कर्म्ममेदानां' ज्ञानावरणादीनां, भोक्ता कर्मफलस्य च, नासोगादेः, अन्वयीति भावः, एतदेवाह—'संसर्त्ता' संसरणशीलः, परिनिर्वाणशीलः, स एवात्मा, न मन्यलक्षणः-इत्येकान्तनित्यादिलक्षणः ॥ ९० ॥ अदृष्टप्रतिपादनायाह—आत्मत्वेनाविशिष्टस्य-एकरूपस्य सतः वैचित्र्य तस्य 'यद्वशात्' यत्सामर्थ्येन, किम्भूतमित्याह—'नरादिरूप' नरनारकादिलक्षणं तच्चित्र, स्वभाववैचित्र्यात्, अदृष्टं कर्मसञ्ज्ञितमिति ॥ ९१ ॥ एतदेवोपपत्तितो दर्शयति—'तथे'त्यादिना, तथा तुल्येऽपि चारम्भे या(णिज्या)दौ सदुपायेऽपि विषज्ञानादिना यो नृणां 'फलभेदः' सम्पद्वास्यादिरूपः स 'युक्तो' घटमानो न युक्त्या हेत्वन्तरं विना, तयोरभिन्न स्वभावत्वादिति ॥ ९२ ॥ यस्मादेवं—'तस्मा'दिति, तस्मादवश्यमेष्टव्यम् 'अत्र' फलभेदे हेत्वन्तरं 'परै' चार्वाकैः, 'तदेव' हेत्वन्तरमदृष्टमित्याहुः 'अन्ये' वादिनः, किम्भूताः ? इत्यत्राह—'शास्त्रकृतश्रमाः' अधीतागमा इत्यर्थः ॥ ९३ ॥ पराभिप्रायमाशङ्क्य परिहरति-'भूताना'मित्यादिना, 'भूतानां' शब्दादिपरिणतानां 'तत्स्वभावत्वात्' तथा फलदानादि-

स्वभावत्वाद् 'अयं' फलभेदः इत्यप्यनुत्तरं, कुत इत्याह—न भूतात्मक एवात्मा येनैतदेवं भवतीति, एतद् 'अत्र' प्रकरणे
निदर्शितं प्राक् ॥ ९४ ॥ न चैवमपि दोष इत्याह—'कर्मण' इत्यादिना, 'कर्मणः' ज्ञानावरणादेः 'भौतिकत्वेन' पौद्गलि-
कत्वेन 'यद्वैतदपि' भूतानां तत्सभावत्वात्फलास्त्यादि 'साम्प्रतं' शोभनमेव । एतदेव स्पष्टयति—आत्मनो व्यतिरिक्तं
'तत्' कर्म्म 'चित्रभावं' नानास्वभावं यतः 'मतम्' इष्टमिति ॥ ९५ ॥ वार्त्तान्तरकथनायाह—

शक्तिरूपं तदन्ये तु, सूरयः संप्रचक्षते । अन्ये तु वासनारूपं, विचित्रफलदं मतम् ॥ ९६ ॥
अन्ये त्वभिदधत्यत्र, स्वरूपनियतस्य वै । कर्त्तुर्विनाऽन्यसम्बन्धं, शक्तिराकस्मिकी कुतः ? ॥ ९७ ॥

'शक्ती'त्यादि, शक्तिरूपं तत्-कर्म अन्ये तु 'सूरयः' पण्डिताः सम्प्रचक्षते, अन्ये तु वासनारूपं तदेव विचित्रफलदं
तथा सम्प्रचक्षत इति ॥ ९६ ॥ वार्त्तान्तरमाह—'अन्ये त्वि'त्यादिना, अन्ये त्वभिदधति अत्रैव—कर्म्माभ्युपगमे 'स्वरूप-
नियतस्य वै' आत्मरूपनियतस्यैव 'कर्त्तुः' आत्मनो 'विनाऽन्यसम्बन्धम्' अर्थान्तरभूतकर्म्मसम्बन्धमन्तरेण शक्तिरा-
कस्मिकी कुतः ?, तत्तत्त्वाविशेषादिति ॥ ९७ ॥ पराभिप्रायमाशङ्क्य परिहरति—'तत्क्रिये'त्यादिना,

तत्क्रियायोगतः सा चेत्, तदपुष्टौ न युज्यते । तदन्ययोगाभावे च, पुष्टिरस्य कथं भवेत् ? ॥ ९८ ॥

'तत्क्रियायोगतः' कर्तृक्रियासम्बन्धेन सा चेत्—शक्तिः, अत्राह—'तदपुष्टौ' आत्मनोऽपुष्टौ सत्तानुपचये सति न
युज्यते, तत्तथा(त्त्वा)विशेषात्, अथ मा भूद्दोष इति पुष्टिरिष्यत इत्यत आह—'तदन्ययोगाभावे च' क्रियया कर्माणु-

[धर्म्मादि]सत्तासम्बन्धाभावे च पुष्टिः 'अस्य' आत्मनः कथं भवेत्?, नैवेत्यभिप्रायः ॥ ९८ ॥ अत्रैवाक्षेपं परिहारं चाह —'अस्त्येवे'त्यादिना,

अस्त्येव सा सदा किन्तु, क्रियया व्यज्यते परम्। आत्ममात्रस्थिताया न, तस्या व्यक्तिः कदाचन ॥९९॥
तदन्यावरणाभावाद्भावे साऽस्यैव कर्म्मता । तन्निराकरणाद्व्यक्तिरिति तन्नेदसंस्थितिः ॥ १०० ॥
पापं तद्भिन्नमेवास्तु, क्रियान्तरनिबन्धनम् । एवमिष्टक्रियाजन्यं, पुण्यं किमिति नेष्यते? ॥ १०१ ॥

अस्त्येव 'सा' शक्तिः कर्म्मसञ्ज्ञिता सदा, किन्तु 'क्रियया' अनुष्ठानरूपया 'व्यज्यते' परफलप्रदानयोग्या क्रियत इत्यर्थः, अत्रोत्तरमाह—आत्ममात्रस्थितायाः, केनचिदनावृताया इत्यर्थः, 'न' नैव 'तस्याः' शक्तेर्व्यक्तिः कदाचन, तल्लक्षणायोगात् ॥ ९९ ॥ एतदेवाह—'तदन्ये'त्यादिना, तदन्यावरणाभावात्, अभावश्चात्ममात्रस्थितत्वात्तस्याः, भावे चाऽऽवरणस्याभ्युपगम्यमाने 'अस्यैव' आवरणस्य कर्मता प्राप्नोति, 'तन्निराकरणात्' कर्मनिराकरणाद् 'व्यक्तिः' उक्तलक्षणायाः शक्तेरिति तन्नेदसंस्थितिः आत्मन आवरणस्येति ॥ १०० ॥ अत्राह—'पाप'मित्यादि, पापं तदावारकं भिन्नमेव 'अस्तु' भवतु, किंविशिष्टमित्याह—'क्रियान्तरनिबन्धनम्', अशुभक्रियाहेतुरित्यर्थः, अत्रोत्तरम्-एवम् 'इष्टक्रियाजन्यं' यागादिक्रियया निष्पाद्यं पुण्यं किमिति नेष्यते? भिन्नं एवात्मयोगि कालान्तरफलदमिति ॥१०१॥ वासनापक्षमधिकृत्याह—

वासनाऽप्यन्यसम्बन्धं, विना नैवोपपद्यते । पुष्पादिगन्धवैकल्ये, तिलादौ नेक्ष्यते यतः ॥ १०२ ॥

'वासने'त्यादि, वासनाऽपि 'अन्यसम्बन्धम्' अर्थान्तरभूतवस्तुसम्बन्धं विना नैवोपपद्यते, निदर्शनमाह–पुष्पादिगन्धवैकल्ये तिलादौ 'नेक्ष्यते' न दृश्यते यत इति ॥ १०२ ॥

बोधमात्रातिरिक्तं तद्, वासकं किञ्चिदिष्यताम्। मुख्यं तदेव वः कर्म्म, न युक्ता वासनाऽन्यथा ॥१०३॥
बोधमात्रस्य तद्भावे, नास्ति ज्ञानमवासितम्। ततोऽमुक्तिः सदैव स्याद्, वैशिष्ट्यं केवलस्य न ॥१०४॥
एवं शक्त्यादिपक्षोऽयं, घटते नोपपत्तितः। बन्धाद्यूनातिरिक्तत्वे, तद्भावानुपपत्तितः ॥ १०५ ॥

'बोधे'त्यादि, यस्मादेवं बोधमात्रातिरिक्तं 'य(त)त्' तस्माद्वा (सकं) किञ्चिदिष्यतां 'मुख्यं' वस्तु सद्, अवस्तुना वासनाऽयोगात्, 'तदेव' वासकं ( वः ) कर्म्म, इत्थं चैतदङ्गीकर्त्तव्यं, न युक्ता वासनाऽन्यथा, अतिप्रसङ्गादिति ॥ १०३ ॥ एतदेवाह–'बोधे'त्यादिना, बोधमात्रस्य तद्भावे, वासनास(व)त्त्वे सति, किमित्याह–नास्ति ज्ञानमवासितं, सर्वत्र तद्भावात्, यतश्चैवं ततः अमुक्तिः सदैव स्याद्, वासनायोगेन, अथ विशिष्टबोधमात्रं वासनेत्यत्राह–वैशिष्ट्यं 'केवलस्य' बोधमात्रस्य 'न' नैव, तन्मात्रत्वात्, तद्भेदमात्रस्याविशिष्टेष्वपि भावादिति ॥ १०४ ॥ उपसंहरन्नाह—'एव'मित्यादि, 'एवम्' उक्तेन प्रकारेण शक्त्यादिपक्षो 'यद्' यस्माद् घटते न 'उपपत्तितः' युक्तितः, बन्धाद्यूनातिरिक्तत्वे सति तन्मात्रत्वेन, 'तद्भावानुपपत्तितः' बन्धनाभावेन बध्यबन्धनीयभावानुपपत्ति(त)ः ॥ १०५ ॥

तस्मात्तदात्मनो भिन्नं, सच्चित्रं चात्मयोगि च। अदृष्टमवगन्तव्यं, तस्य शक्त्यादिसाधकम् ॥ १०६ ॥

अदृष्टं कर्म्म संस्कारः, पुण्यापुण्ये शुभाशुभौ। धर्माधर्म्मौ तथा पाश, पर्यायास्तस्य कीर्त्तिता ॥१०७॥
हेतवोऽस्य समाख्याता, पूर्वं हिंसाऽनृतादय । तद्वान् संयुज्यते तेन, विचित्रफलदायिना ॥ १०८ ॥
नैव दृष्टेष्टबाधा यत्सिद्धिश्चास्यानिवारिता । तदेनमेव विद्वांसस्तत्त्ववादं प्रचक्षते ॥ १०९ ॥

'तस्मा'दित्यादि, यस्मादेवं तस्मात्—कर्म आत्मनो भिन्नं, सदिति वस्तु, न कल्पनामात्रं, 'चित्रं च' नानाप्रकारं च, 'आत्मयोगि च' आत्मसम्बन्धि च 'अदृष्टं' कर्मावगन्तव्यं 'तस्य' आत्मनः सत्त्वादिसाधकं, तदभावेनोक्तयुक्त्या (शक्त्या)ऽभावादिति ॥ १०६ ॥ दर्शनाङ्गीकरणेनास्यैव पर्यायशब्दानाह—'अदृष्ट'मित्यादिना, 'अदृष्ट'मिति वैशेषिकाः, 'कर्मे'ति जैनाः, संस्कारा इति सौगताः, पुण्यापुण्ये इति वेदवादिनः, शुभाशुभे(भौ)इति गणकाः, धर्माधर्माविति साङ्ख्याः, तथा पाश इति शैवाः, सर्वे एव वा सर्ववादिनिति, पर्याया 'तस्य' अदृष्टस्य कीर्त्तिता इति ॥ १०७ ॥ के पुनरस्य हेतव ? इत्याह—हेतवः 'अस्य' अदृष्टस्य समाख्याताः, 'पूर्वं' प्रारम्भे 'हिंसाऽनृतादयः पञ्चे'त्यभिधानात्, पदार्थसमतः 'तद्वान्' हिंसादिमान् संयुज्यते 'तेन' अदृष्टेन, किंविशिष्टेन ? इत्याह—'विचित्रफलदायिना' ( चित्रा ) शुभफलदेनेति ॥१०८॥ अथमेव सद्वाद इत्याह—'नैव'मित्यादि, नैवमभ्युपगम्यमाने दृष्टेष्टबाधा चकेन प्रकारेण 'यद्' यस्मात्स्यात्, सिद्धिश्च 'अस्य' अदृष्टादेः 'अनिवारिता' न्याय्यैव, 'तत्' तस्माद् 'एनमेव' आत्मादृष्टवादं 'विद्वांस' पण्डिताः 'तत्त्ववादं' परमार्थवादं प्रचक्षते, न तद्विपरीतवादमिति ॥ १०९ ॥ एतदेवाह—'लोकायत'मित्यादिना—

लोकायतमतं प्राज्ञैर्ज्ञेयं पापौघकारणम् । इत्थं तत्त्वविलोमं यत्तन्न ज्ञानविवर्द्धनम् ॥ ११० ॥
इन्द्रप्रतारणायेदं, चक्रे किल बृहस्पतिः । अदोऽपि युक्तिशून्यं यन्नेत्थमिन्द्रः प्रतार्यते ॥ १११ ॥
तस्माद्दुष्टाशयकरं, क्लिष्टसत्त्वविचिन्तितम् । पापश्रुतं सदा धीरैर्वर्ज्यं नास्तिकदर्शनम् ॥ ११२ ॥

'लोकायतमतं' नास्तिकदर्शनमतोऽपरमार्थतत्त्ववादत्वात् प्राज्ञैर्ज्ञेयं 'पापौघकारणं' पापसङ्घातनिमित्तम्, एतदेव 'इत्थम्' उक्तेन प्रकारेण 'तत्त्वविलोमं' परमार्थप्रतिकूलं यत् तथा ज्ञानविवर्द्धनं न, न तत्त्वसंवेदनो(नानु)-भावयति—'इत्थम्' उक्तेन प्रकारेण ... अपि तु प्रतिपक्षवृद्धिकारकमित्यर्थः ॥११०॥ अस्य मूढजनविकल्पितविषयत्रिभागनिराकरणायाह—'इन्द्रे'त्यादि, पकार्येव, अपि तु प्रतिपक्षवृद्धिकारकमित्यर्थः ॥११०॥ अस्य मूढजनविकल्पितविषयत्रिभागनिराकरणायाह—'इन्द्रे'त्यादि, 'इन्द्रप्रतारणाय' वृत्रदानवव्यापत्तये 'इदं' लोकायतमतं 'चक्रे' कृतवान् किल 'बृहस्पतिः' देवगुरुः, 'अदोऽपि' तदपि 'युक्तिशून्यं' युक्तिविकलं, 'यतो' यस्मान्नेत्थमिन्द्रः प्रतार्यते, दिव्यबुद्धित्वात्तस्य ॥ १११ ॥ 'तस्मा'दित्यादि, यस्मादेवं तस्माद् दुष्टाशयकरमज्ञानवृद्ध्या, 'क्लिष्टसत्त्वविचिन्तितम्' असमञ्जसत्वेन पापश्रुतमत एव हेतोः, यतश्चैवमतः सदा 'धीरैः' महासत्त्वैः 'वर्ज्यं' वर्जनीयं नास्तिकदर्शनमिति लोकायतमतेनात्मवार्त्ता॥११२॥वार्त्तान्तरमाह-'हिंसे'त्यादिना-

हिंसादिभ्योऽशुभं कर्म्म, तदन्येभ्यश्च तच्छुभम्। जायते नियमो मानात्, कुतोऽयमिति चापरे? ॥११३॥
आगमाख्यात्तदन्ये तु, तच्च दृष्टाद्यबाधितम् । सर्वार्थविषयं नित्यं, व्यक्तार्थं परमात्मना ॥ ११४ ॥

चन्द्रसूर्योपरागादेस्तत संवाददर्शनात् । तस्याप्रत्यक्षेऽपि पापादौ, न प्रामाण्यं न युज्यते ॥ ११५ ॥

'हिंसादिभ्य' हिंसाऽनृतस्तेयाब्रह्मपरिग्रहेभ्यः, किमित्याह—'अशुभ कर्म' दुःखफलदं, 'तदन्येभ्यश्च' अहिंसादिभ्यश्च 'तत्' कर्म 'शुभ' सुखफलदं 'जायते' निष्पद्यते, नियमात् तदेवमेवेत्येवंरूपं मानात्कुतोऽयमिति च 'अपरे'—सन्देहवादिन इति ॥ ११३ ॥ वार्तान्तरमाह—'आगमाख्या'दित्यादिना, 'आगमाख्यात्' मानात् 'तदन्ये तु' असन्देहवादिनो, ब्रुवत इति वाक्यशेषः, 'तच्च' आगमाख्यं मान 'दृष्टेष्टाबाधित' दृष्टेष्टाविरुद्धमित्यर्थः, तथा 'सर्वार्थविषय' सर्वपदार्थगोचर नित्य, प्रवाहरूपेण, व्यक्ताय 'परमात्मना' सर्वज्ञेन अप्रत्यक्षेण ॥ ११४ ॥ प्रामाण्यमाह—'चन्द्रे'त्यादिना, चन्द्रसूर्योपरागादेः 'तत' आगमाख्यात्मानात् संवाददर्शनाद्धेतोः 'तस्य' आगममानस्याप्रत्यक्षेऽपि पापादौ विषये न प्रामाण्यं न युज्यते, किन्तु युज्यत एव ॥ ११५ ॥ पराभिप्रायमाह—'यदी'त्यादिना—

यदि नाम क्वचिद्दृष्ट, संवादोऽन्यत्र वस्तुनि । तद्भावस्तस्य तत्त्व वा, कथं समवसीयते ? ॥ ११६ ॥

आगमेकस्यतस्तच्च, वाक्यादेस्तुल्यतादिना । सुवृद्धसम्प्रदायेन, तथा पापक्षयेण च ॥ ११७ ॥

अन्यथा वस्तुतत्त्वस्य, परीक्षैव न युज्यते । आशङ्का सर्वगा यस्माच्छद्मस्थस्योपजायते ॥ ११८ ॥

अपरीक्षाऽपि नो युक्ता, गुणदोषाविवेकत । महत्सङ्कटमायातमाऽऽके न्यायमादिन ॥ ११९ ॥

**तस्माद्यथोदितात्सम्यगागमाख्यात्प्रमाणतः । हिंसादिभ्योऽशुभादीनि, नियमोऽयं व्यवस्थितः ॥१२०॥**

यदि नाम 'क्वचित्' चन्द्रोपरागादौ दृष्टः संवादस्तथाऽप्यन्यत्र वस्तुनि-पापादौ 'तद्भावः' संवादभावः 'तस्य' तदभिधायकस्यागमस्य तत्त्वं ( अविसंवादिस्वरूपत्वं ) वा 'कथं समवसीयते' कथं ज्ञायत इत्यर्थः॥ ११६ ॥ अत्रोत्तरमाह—'आगमे'त्यादिना, आगमैकत्वं प्रत्यागमिकत्वेन समवसीयत इति, 'तच्च' आगमैकत्वं 'वाक्यादेः' वाक्यपदगाम्भीर्यादेस्तुल्यतादिना समवसीयते, एक एवायमागम इति, तथा 'सुवृद्धसंप्रदायेन' सम्पूर्णाभिव्यज्यमानोपलब्धसम्प्रदायाविच्छेदेन, तथा पापक्षयेण च सत्क्षयोपशमवद्भिः समवसीयत इति ॥ ११७ ॥ एतदेव समर्थयति—'अन्यथे'त्यादिना, अन्यथा यद्येवं नेष्यते ततो वस्तुतत्त्वस्य परीक्षैव न युज्यते, उपायाभावात्, एतदेवाह—आशङ्का—संशयलक्षणा सर्वगा यस्मात् छद्मस्थस्य प्रमातुरुपजायते, असदभिनिवेशेन ॥ ११८ ॥ एवं च सति—'अपरीक्षाऽपी'त्यादि, अपरीक्षाऽपि वस्तुतत्त्वस्य नो युक्ता, कुतः? इत्याह—गुणदोषाविवेकतः, को जानाति मानानामपरीक्षैव दोषवत् स्यात्, एवं महत्सङ्कटमायातमेतेन, कस्येत्याह—'आशङ्के न्यायवादिनः' पापादौ विशेषवाची अत्यन्तभिन्नो वाऽयमागम इति संशयवादिन इति ॥ ११९ ॥ निगमयन्नाह—'तस्मा'दित्यादि, यस्मादेवं तस्माद्यथोदितात्सम्यगागमाख्यात्प्रमाणतः, किमित्याह—हिंसादिभ्योऽशुभादीनि नियमोऽयं 'व्यवस्थितः' प्रतिष्ठित इत्यर्थः ॥ १२० ॥ एतदेव भावयति—'क्लिष्टा'दित्यादिना—

**क्लिष्टाद्धिंसाद्यनुष्ठानात्, प्राप्तिः क्लिष्टस्य कर्म्मणः । यथाऽपथ्यभुजो व्याधेरक्लिष्टस्य विपर्ययात् ॥१२१॥**

स्वभाव एव जीवस्य, यत्तथापरिणामभाक् । बध्यते पुण्यपापाभ्यां, माध्यस्थ्यात्तु विमुच्यते ॥ १२२॥
सुदूरमपि गत्वेह, विहितासूपपत्तिषु । क स्वभावागमावन्ते, शरण न प्रपद्यते ? ॥ १२३ ॥

'क्लिष्टात्' सत्क्लेशबहुलात् हिंसाद्यनुष्ठानात् सकाशात् प्राप्तिः क्लिष्टस्य कर्मणः—ज्ञानावरणादेः, निदर्शनमाह—यथा 'अपथ्यभुजः' अपथ्यभोजनात् सकाशात् व्याधेः प्राप्तिः, अक्लिष्टस्य कर्मणो 'विपर्ययात्' अहिंसाद्यनुष्ठानादिति ॥१२१॥ किमेतदेवमित्याह—'स्वभाव' इत्यादि, स्वभाव एव जीवस्य 'यत्' यतः स्वभावात् तथापरिणामभाक्—हिंसादिपरिणाम भाक् बध्यते पुण्यपापाभ्यां यथायोग्यं, माध्यस्थ्यात्तु विमुच्यते, सामायिकपरिणामादित्यर्थः ॥ १२२ ॥ न च स्वभावपक्षो न न्याय्य इत्याह—'सुदूरमपी'त्यादिना, 'सुदूरमपि' पर्यन्तमपि गत्वेह मार्गे 'विहितासु' कृतासु आहितासु वा उपपत्तिषु को वादी बौद्धमीमांसकादिः स्वभावागमावन्ते, स्वहेतोरेव क्षणस्थितिधर्मो जातः, सोऽपि तत्स्वभाव एव, अन्तर्वे दोहिंसायामदोष आगमादित्येवं शरण न प्रपद्यते ?, सर्व एव प्रपद्यत इत्यर्थः ॥ १२३ ॥ चोदक आह—

प्रतिपक्षस्वभावेन, प्रतिपक्षागमेन च । बाधितत्वात्कथं ह्येतौ, शरण युक्तिवादिनाम् ? ॥ १२४ ॥
प्रतीत्या बाध्यते यो यत्, स्वभावो न स युज्यते । वस्तुनः कल्प्यमानोऽपि, वह्न्यादेः शीततादिवत् ॥१२५॥

'प्रतिपक्षे'त्यादि, प्रतिपक्षस्वभावेन बाधि(बाध)केन प्रतिपक्षागमेन च तद्विरुद्धेन बाधितत्वात् कारणात्कथं हि 'एतौ' स्वभावागमौ शरणं युक्तिवादिनाम् ?, नैवेत्यभिप्रायः ॥ १२४ ॥ अत्रोत्तरमाह—'प्रतीत्ये'त्यादिना, 'प्रतीत्या' अनुभवेन

बाध्यते यः स्वभावो 'यत्' यस्मात् स तथाविधः स्वभावो 'न युज्यते' न घटते 'वस्तुनः' सर्वस्यैव कल्प्यमानोऽपि, किंवदित्याह–वह्न्यादेः 'शीततादिवत्', शीतत्वादिव(द् नावस्तु) भूतः शरणमितियोगः ॥ १२५ ॥ अत्रैव तथा तथा पराभिप्रायमाशंक्य परिहरन्नाह—

वह्नेः शीतत्वमस्त्येव, तत्कार्यं किं न दृश्यते ? । दृश्यते हि हिमासन्ने, कथमित्थं ? स्वभावतः ॥१२६॥
हिमस्यापि स्वभावोऽयं, नियमाद्वह्निसन्निधौ । करोति दाहमित्येवं, वह्न्यादेः शीतता न किम् ? ॥१२७॥
व्यवस्थाऽभावतो ह्येवं, या त्वद्बुद्धिरिहेदृशी । सा लोष्टादस्य यत्कार्यं, तत्त्वतस्तत्स्वभावतः ॥ १२८ ॥

'वह्ने'रित्यादि, स्यादेतद्–वह्नेः शीतत्वमस्त्येव, विषमारणत्वात्, मृगतृष्णिकावद्वावद (वद्, मा भूदद) इत्यत्राह–तत्कार्यं शीतत्वकार्यं किं न दृश्यते ?, स्यादेतत्, दृश्यते हि हिमासन्ने, रोमाञ्चादिभावात्, अत्राह—'कथमित्थम् ?' इति कथमेतदेवम् ?, इतर आह–इत्थं स्वभावतः, तस्यैतत्स्वभावत्वादित्यर्थः ॥ १२६ ॥ हिमस्यापि स्वभावोऽयम्–एवंभूत एव, येन नियमाद्वह्निसन्निधौ–अग्निसमीप एव करोति दाहं, स्वकार्यदेशविप्रकर्षेणैव, अयस्कान्तवन्नागदमनीवद्वेति, एवं वह्न्यादेः शीतता न किम् ?, अस्त्येवेत्यर्थः ॥ १२७ ॥ अत्रोत्तरमाह—'व्यवस्थे'त्यादिना, व्यवस्थाऽभावतो ह्येवं सर्वत्र नियमाभावादेतदपि स्यात्, यदुत या त्वद्बुद्धिरिहेदृशी–स्वभावान्यथात्वप्रकल्पनात्मिका सा लोष्टादेव, यद् 'अस्य'

लोष्टस्य 'यत्कार्यम्' अभिघातादि तत् स्वधा—स्वस्वभावात्, कुत इत्याह—तत्स्वभावत', प्रक्रमादुभयोस्तत्स्वभावत्वादिति भावः ॥ १२८ ॥ यदि नामैवं ततः किमित्याह—

एवं सुबुद्धिशून्यस्य, भवतोऽपि प्रसज्यते । अस्तु चेत्को विवादो नो, बुद्धिशून्येन सर्वथा ? ॥१२९॥

'एव' मित्यादि, 'एवम्' उक्तेन प्रकारेण सुबुद्धिशून्यस्य भवतोऽपि प्रसज्यते, अपिशब्दाल्लोष्टस्यापि बुद्धियुक्तत्वमिति, अस्तु चेत्—न्यायानुगतत्वात्सर्वमेवैतदित्याशङ्क्याह—को विवादो 'नः' अस्माकं 'बुद्धिशून्येन' उक्तबुद्धिविकलेन सर्वथा ?, भवतानेन विवादायोगादिति ॥ १२९ ॥ वार्तान्तरमाह—

अन्यस्त्वाहेह सिद्धेऽपि, हिंसादिभ्योऽशुभादिके । शुभादेरेव सौख्यादि, केन मानेन गम्यते ? ॥१३०॥

अन्यस्त्वाह—इह न्यायेन लोके प्रसिद्धेऽपि हिंसादिभ्य सकाशात् 'अशुभादिके' कर्मणि शुभादेरेव सकाशात् सौख्यादि न तु व्यत्ययेनेत्येतत् केन मानेन गम्यते ?, नात्र किञ्चिन्मानमित्यभिप्रायः ॥१३०॥ वार्तान्तरमाह—'अत्रापी'त्यादिना—

अत्रापि ब्रुवते केचित्, सर्वथा युक्तिवादिन । प्रतीतिगर्भया युक्त्या, किलैतदवसीयते ॥ १३१ ॥

तथाहुर्नाशुभात्सौख्य, तद्वत्तुल्यप्रसक्तितः । बहव पापकर्माणो, विरलाः शुभकारिण ॥ १३२ ॥

न चैतद् दृश्यते लोके, दुःखबाहुल्यदर्शनात् । शुभात्सौख्य तत सिद्धमतोऽन्यच्चाप्यतोऽन्यत ॥१३३॥

'अत्रापि' एवंविधे पूर्वपक्षे शुचिय(म)न्तः 'केचित्' कुशाग्रीयबुद्धयः 'सर्वथा युक्तिवादिनः' आगमनिरपेक्षाः, किमि

त्याह—'प्रतीतिगर्भया' अनुभवमङ्गतया 'युक्त्या' किलैतदवसीयते यदुत—शुभादेरेव सौख्यादीति ॥ १३१ ॥ तन्मतान्तरमाह—'न आ'रित्यादि, त आहुर्नाशुभात्सौख्यं, किन्तु शुभादेव, कुत इत्याह—'तद्बाहुल्यप्रसङ्गतः' सौख्यबाहुल्यप्रसङ्गात्, अत्रोपपत्तिः—बहवः पापकर्माणः प्राणिनः, असत्प्रवृत्तेः, विरलाः शुभकारिणः, तथा दर्शनादिति ॥ १३२ ॥ यदि नामैवं ततः किमित्याह—'न चैत'दित्यादि, नचैतत्—सौख्यबाहुल्यं दृश्यते लोके, कुतः इत्याह—दुःखबाहुल्यदर्शनात्, प्रतीतिसिद्धेः, यत एवं शुभात्सौख्यं ततः सिद्धं, तत्कार्याल्पत्वेन तदल्पत्वोपपत्तेः, अतोऽन्यच्चापि—दुःखं चाऽन्यतः, अन्यतः अशुभात् सिद्धं, तत्कारिबहुत्वेन तद्बहुत्वसिद्धेरिति ॥ १३३ ॥ वार्त्तान्तरमाह—'अन्ये पुन'रित्यादिना—

अन्ये पुनरिदं श्राद्धा, ब्रुवते आगमेन वै । शुभादेरेव सौख्यादि, गम्यते नान्यतः क्वचित् ॥ १३४ ॥

अतीन्द्रियेषु भावेषु, प्राय एवंविधेषु यत् । छद्मस्थस्याविसंवादि, मानमन्यत् न विद्यते ॥ १३५ ॥

यच्चोक्तं दुःखबाहुल्यदर्शनं तत्र साधकम् । क्वचित्तथोपलम्भेऽपि, सर्वत्रादर्शनादिति ॥ १३६ ॥

सर्वत्र दर्शनं यस्य, तद्वाक्यात् किं न साधनम् ?। साधनं तद्भवत्येवमागमात्तु न भिद्यते ॥ १३७ ॥

अन्ये पुनः 'इदं' वक्ष्यमाणलक्षणं 'श्राद्धाः' श्रद्धावन्तः ब्रुवते—'आगमेन वै' स्वा(आ)गमेनैव, किमित्याह—शुभादेरेव सौख्यादि गम्यते, आदिशब्दादशुभात् दुःखमिति, नान्यतः क्वचित्, नान्येन मानेनेत्यर्थः ॥ १३४ ॥ किमेतदेवमित्याह

—'अतीन्द्रियेष्वि'त्यादि, अतीन्द्रियेषु 'भावेषु' पदार्थेषु प्राय एवंविधेषु शुभादेः सौख्यादीत्येवंप्रकारेषु 'यत्' यस्मात् छद्मस्थस्याविसंवादि—इदमित्थमेवेति नियमवत् मानमन्यत् न विद्यते, आगमं विहाय, साक्षाद्दर्शनादिति ॥ १२५॥ पर युक्तिदूषणमाह—'यथोक्त'मित्यादिना, यथोक्त परेण दुःखबाहुल्यदर्शने शुभात्सौख्यसिद्धौ, एतच्च साधक, कुत इत्याह —'क्वचिद्' भरतादौ 'तथोपलम्भेऽपि' दुःखबाहुल्योपलम्भेऽपि सर्वत्रैवादर्शनादिति भावः ॥ १२६ ॥ पराभिप्रायमा शङ्क्य परिहरमाह—'सर्वत्र'त्यादिना, सर्वत्र दर्शने 'पक्ष' सर्वज्ञादेः तद्वाप्यस्तु किं न साधनं ?, दुःखबाहुल्यदर्शनं, स हि दर्शयमाहेति, अत्रोत्तरं—साधन 'तत्' दुःखबाहुल्यदर्शनं भवत्येव, शुभादेः सौख्यादीत्यस्य, आगमात्तु न भिद्यते, आप्त वचनत्वात्तस्य, ततस्तथाप्रतीतेरिति ॥ १२७ ॥ प्रकृतोपयोग्येव किञ्चिदाह—

अशुभादप्यनुष्ठानात्सौख्यप्राप्तिश्च या क्वचित् । फल विपाकविरसा, सा तथाविधकर्मण ॥ १२८ ॥
ब्रह्महत्यानिदेशानुष्ठानाद्ग्रामादिलाभवत् । न पुनस्तत एवैतदागमादेव गम्यते ॥ १२९ ॥

'अशुभा दि'त्यादि, अशुभादप्यनुष्ठानात्—चौर्यादेः सौख्यप्राप्तिश्च या क्वचित् लोकसिद्धा, फलं विपाकविरसा सौख्य प्राप्तिः 'तथाविधकर्मण' तत्प्रकारफलदायिनः, अशुभानुबन्धिनः शुभस्यैवेत्यर्थः ॥ १२८ ॥ निदर्शनमाह—'ब्रह्महत्ये' त्यादिना, 'ब्रह्महत्यानिदेशानुष्ठानात्' ब्राह्मणं व्यापादय ततस्त्वं (त्वयां) ग्रामं दास्यामीत्याज्ञासम्पादनात् ग्रामादिलाभवत्, स हि तत्प्रकारफलदायिकर्मण एव भवति, न पुनः 'तत एव' ब्रह्महत्याऽनुष्ठानात्, 'एतत्' एवंप्रकारं वस्तु आगमादेव

गम्यते, नान्यतः कुतश्चिद्, अविषयत्वादिति ॥१३९॥ यदुक्तं—"प्रतिपक्षागमेन चे"(१२४)ति तत्परिजिहीर्षयाऽऽह—

प्रतिपक्षागमानां च, दृष्टेष्टाभ्यां विरोधतः । तथाऽनाप्तप्रणीतत्वादागमत्वं न युज्यते ॥ १४० ॥
दृष्टेष्टाभ्यां विरोधाच्च, तेषां नाप्तप्रणीतता । नियमाद्गम्यते यस्मात्तदसावेव दर्श्यते ॥ १४१ ॥

'प्रतिपक्षे'त्यादि, प्रतिपक्षागमानां अधिकृतार्थबाधकानां दृष्टेष्टाभ्यां विरोधतः कारणात्, तथा अनाप्तप्रणीतत्वादिति हेत्वन्तरतः, आगमत्वं न युज्यते, तल्लक्षणाभावादिति ॥ १४० ॥ 'दृष्टे'त्यादि, दृष्टेष्टाभ्यां विरोधाद्धेतोः 'तेषाम्' आगमानामनाप्तप्रणीतता नियमाद्गम्यते यतो यस्मात् तत्—तस्मादसावेव—दृष्टेष्टविरोधः दर्श्यत इति ॥ १४१ ॥ एतदेवाह—

अगम्यगमनादीनां, धर्मसाधनता क्वचित् । उक्ता लोकप्रसिद्धेन, प्रत्यक्षेण विरुध्यते ॥ १४२ ॥
स्वधर्मोत्कर्षा(र्षणा)देव, तथा मुक्तिरपीष्यते । हेत्वभावेन तद्भावो, नित्य इष्टेन बाध्यते ॥ १४३ ॥
माध्यस्थ्यमेव तद्धेतुरगम्यगमनादिना । साध्यते तत्परं येन, तेन दोषो न कश्चन ॥ १४४ ॥

'अगम्ये'त्यादि, 'अगम्यगमनादीनां' भगिन्यादिगमनमांसभक्षणादीनां धर्मसाधनता क्वचित् मण्डलतन्त्रादौ 'उक्ता' प्रतिपादिता सा लोकप्रसिद्धेन—आविद्धदङ्गनादिसम्मतेन प्रत्यक्षेण विरुध्यते, प्रतीत्या बाध्यत इति भावः ॥ १४२ ॥ उक्तो लोकदृष्टविरोधः, इष्टविरोधमाह—'स्वधर्मोत्कर्षादेव' अगम्यगमनादिप्रकर्षादेव तथा मुक्तिरपीष्यते,

भविकृतागम्यगमनादिभिः, यदि नामैव ततः किमित्याह—'हेत्वभावेन' अगम्यगमनाद्युत्कर्षाभावेन 'तद्भाव' मुक्तिभावः 'मिथ्य' शाश्वतः दृष्टेन साध्यते, हेत्वभावेन तदुत्कर्षाभावे परममाध्यस्थ्याभावप्रसक्तस्तदभावादिति ॥ १४३ ॥ पराभिप्रायमाह—'माध्यस्थ्य'मित्यादिना, माध्यस्थ्यमेव 'तद्धेतु' मुक्तिहेतुः परो वर्त्तते, किन्त्वगम्यगमनादिना साध्यते तत्पर, गम्यागम्यादिषु तुल्यतया प्रवृत्तिः येन प्रकारेण, नैतदेवं, तेन दोषो न कश्चन प्रतिभाति, परममाध्यस्थ्यादेव मुक्तिसिद्धिरिति ॥ १४४ ॥ अत्रोत्तरम्—

एतदप्युक्तिमात्रं यदगम्यगमनादिषु । तथाऽप्रवृत्तितो युक्त्या, माध्यस्थ्य नोपपद्यते ॥ १४५ ॥
अप्रवृत्त्येव सर्वत्र, यथासामर्थ्यभावतः । विशुद्धभावनाभ्यासात्, तन्माध्यस्थ्य परं यत ॥ १४६ ॥

'एतदपी'त्यादि, 'एतदपि' अनन्तरोदितमुक्तिमात्रं 'यत' यस्मात् 'अगम्यगमनादिषु' अनन्तरोदितेषु 'तथाऽप्रवृत्तितः' तुल्यतयाऽप्रवृत्तेः 'युक्त्या' न्यायेन माध्यस्थ्यं नोपपद्यते परमिति ॥ १४५ ॥ यथोपपद्यते तथाऽऽह—'अप्रवृत्त्ये'वेत्यादि, अप्रवृत्त्यैव 'सर्वत्र' गम्यागम्यादौ, 'यथासामर्थ्यभावत' यथासामर्थ्यभावेनाप्रवृत्त्या, 'विशुद्धभावनाभ्यासात्' यथोचितं भावनाऽभ्यासात् भावते तन्माध्यस्थ्य 'परं' सर्वत्राप्रवृत्तिरूपं यतः, अतोऽन्यथा नोपपद्यत इति भावः ॥ १४६ ॥ पराभिप्रायमाह—

यावदेवंविध नैतत्प्रवृत्तिस्तावदेव या । साऽविशेषेण साध्वीति, तस्योत्कर्षप्रसाधनात् ॥ १४७ ॥

**नाप्रवृत्तेरियं हेतुः, कुतश्चिदनिवर्त्तनात् । सर्वत्र भावाविच्छेदादन्यथाऽगम्यसंस्थितिः ॥ १४८ ॥**

'याव'दिति, यावदेवंविधं परमं न 'एतत्' माध्यस्थ्यं प्रवृत्तिस्तावदेव या क्वचित् पुंसां सा 'अविशेषेण' गम्यागम्यादिषु सामान्येन साध्वीति, कुत इत्याह—'तस्य' अविशेषस्य 'उत्कर्षसाधनात्' माध्यस्थ्योत्कर्षसाधनादिति गर्भः ॥ १४७ ॥ अत्रोत्तरम्—'नाप्रवृत्ते'रित्यादि, नाप्रवृत्तेः 'इयम्' अविशेषप्रवृत्तिः 'हेतुः' कारणं, कुतः, इत्याह—कुतश्चिदनिवर्त्तनात्, तथाहि—नेयं कुतश्चिदत्यन्तं निवर्त्तयति, यथालाभं सर्वत्र प्रवृत्तेः,एतदेवाह—'सर्वत्र भावाविच्छेदात्' सर्वभोग्येष्वविशेषेणाभिसन्धेरित्यर्थः, 'अन्यथा' क्वचिद्भावविच्छेदेन क्वचिदेव प्रवृत्तौ 'अगम्यसंस्थितिः' भावविच्छेदात् यदितरस्मिन्(अ)प्रवृत्तिः, तस्यैवागम्यत्वादिति ॥ १४८ ॥ अधिकृतोपचययायाह—

**तच्चास्तु लोकशास्त्रोक्तं, तत्रौदासीन्ययोगतः । संभाव्यते परं ह्येतद्भावशुद्धेर्महात्मनाम् ॥ १४९ ॥**

'तच्चे'त्यादि, 'तच्च' अगम्यम् अस्तु 'लोकशास्त्रोक्तं' भगिन्याद्येव, तत्र 'औदासीन्ययोगतः' अरक्तद्विष्टतया प्रवृत्तियोगात्, संभाव्यते परं हि सर्वत्र निःस्पृहतया प्रवृत्तिरूपम् 'एतत्' माध्यस्थ्यं, कुत इत्याह—'भावशुद्धेः' एकान्तविहितानुष्ठानरूपायाः सकाशात् 'महात्मनां' महासत्त्वानामिति ॥१४९॥ आगमान्तराभिप्रायावलम्बितोऽप्येषः ? इत्याह—

**संसारमोचकस्यापि, हिंसा यद्धर्म्मसाधनम् । मुक्तिश्चास्ति ततस्तस्याप्येष दोषोऽनिवारितः ॥ १५० ॥**

'संसारे'त्यादि, संसारमोचकस्यापि, न केवलं मण्डलतन्त्रवादिन एव, हिंसा यद्धर्म्मसाधनं दुःखमोक्षणेन, मुक्ति-

भावि, यदि नामैवं ततः किमित्याह—ततः 'तस्यापि' संसारमोचकस्य एव दोषो—मुक्तेरनित्यत्वलक्षणः प्रचारितः, तुल्य एवेत्यर्थः ॥ १५० ॥ एतदेव भावयन्नाह—

मुक्तिः कर्मक्षयादेव, जायते नान्यतः क्वचित् । जन्मादिरहिता यत्तत्स एवात्र निरूप्यते ॥ १५१ ॥

'मुक्ति'रित्यादि, मुक्तिः कर्मक्षयादेव, पुण्यापुण्यक्षयादित्यर्थः, सा जायते न 'अन्यतः' दानादेः क्वचित्, जन्मादिरहिता मुक्तिर्नित्येत्यर्थः, 'यत्' यस्मादेव 'तत्' तस्मात् 'स एव' कर्मक्षयो निरूप्यत इति ॥ १५१ ॥ निरूपयन्नाह—

हिंसाद्युत्कर्षसाध्यो वा, तद्विपर्ययजोऽपि वा । अन्यहेतुरहेतुर्वा, स वै कर्म्मक्षयो ननु ? ॥ १५२ ॥

'हिंसादी'त्यादि, 'हिंसाद्युत्कर्षसाध्यो वा' हिंसोपरदुःखापनयनोत्कर्षसाध्यो वा तद्विपर्ययजोऽपि वा 'अन्यहेतुः' अविवक्षितोऽपरहेतुः 'अहेतुर्वा' निर्हेतुक एव स वै कर्मक्षयो नन्विति विकल्पाः ॥ १५२ ॥ एतेषु दोषानाह—

हिंसाद्युत्कर्षसाध्यत्वे, तदभावे न तत्स्थितिः । कर्म्मक्षयास्थितौ च स्यान्मुक्तानां मुक्तताक्षितिः ॥१५३॥

'हिंसादी'त्यादि, हिंसाद्युत्कर्षसाध्यत्वे कर्म्मक्षयस्य 'तदभावे' हिंसाद्युत्कर्षाभावे 'न तत्स्थितिः' न कर्मक्षयस्थितिः, एकाधारक्रियाफलत्वात्, यदि नामैवं ततः किम् ? इत्याह—कर्मक्षयाऽस्थितौ च सत्यां स्यान्मुक्तानां मुक्तताक्षितिरिति ॥ १५३ ॥ तथा—

तद्विपर्ययसाध्यत्वे परसिद्धान्तसंस्थितिः । कर्म्मक्षयः सतां यस्मादहिंसादिप्रसाधनः ॥ १५४ ॥

'तद्विपर्यये'त्यादि, 'तद्विपर्ययसाध्यत्वे' अहिंसाद्युत्कर्षसाध्यत्वे कर्मक्षयस्य, किम्? इत्याह—'परसिद्धान्तसंस्थितिः' अन्या-
भ्युपगमसिद्धिः, एतदेवाह—कर्मक्षयः 'सतां' साधूनां यस्माद् अहिंसादिप्रसाधनोऽन्येषां प्राणिनामिति ॥ १५४ ॥ तथा—

**तदन्यहेतुसाध्यत्वे, तत्स्वरूपमसंस्थितम् । अहेतुत्वे सदा भावोऽभावो वा स्यात्सदैव हि ॥ १५५ ॥**

'तदन्ये'त्यादि, तदन्यहेतुसाध्यत्वे कर्म्मक्षयस्य 'तत्स्वरूपम्' अन्यहेतुस्वरूपम् 'असंस्थितं' सम्यक् न सिद्धम्, उक्त-
व्यतिरेकेणाभावादित्यभिप्रायः । चतुर्थपक्षमधिकृत्याह—अहेतुत्वे कर्मक्षयस्य सदाभावः, अहेतुत्वाविशेषात्, अभावो वा
स्यात्कर्मक्षयस्य सदैव हि, तत एव हेतोरिति ॥ १५५ ॥ तदत्र द्वितीयविकल्प एव न्याय्य इति दर्शयति—

**मुक्तिः कर्म्मक्षयादिष्टा, ज्ञानयोगफलं स च । अहिंसादि च तद्धेतुरिति न्यायः सतां मतः ॥ १५६ ॥**

'मुक्ति'रित्यादि, मुक्तिः कर्म्मक्षयाद् 'इष्टा' अभ्युपगता, ज्ञानयोगफलं च कर्मक्षय इष्टः, अहिंसादि च 'तद्धेतुः' ज्ञान-
योगहेतुरिति न्यायः सतां 'मतः' इष्टः अविरोधी च ॥ १५६ ॥ वार्त्तान्तरासारतामाह—'एव'मित्यादिना—

**एवं वेदविहिताऽपि, हिंसाऽपायाय तत्त्वतः । शास्त्रचोदितभावेऽपि, वचनान्तरबाधनात् ॥ १५७ ॥**

एवं यथा संसारमोचकस्य हिंसा तद्वद् वेदविहिताऽपि 'श्वेतं वायव्यमजमालभेत भूतिकाम' इति चोदिताऽपि हिंसा
'अपायाय' प्रत्यपायार्थमेव 'तत्त्वतः' परमार्थतः 'शास्त्रचोदितभावेऽपि' शास्त्रचोदितत्वेऽपि सतीत्यर्थः, कुतः? इत्याह—
'वचनान्तरबाधनात्' स्वशास्त्रप्रसिद्धेनैव वचनान्तरेण विरोधात् ॥ १५७ ॥ एतदेव भावयन्नाह—

न हिंसादिह भूतानि, हिंसनं दोषकृन्मतम् । दाहस्त्वैद्यके स्पष्टमुत्सर्गप्रतिषेधत ॥ १५८ ॥

'न हिंसा'दित्यादि, 'न हिंस्यादिह भूतानि' इत्यत्र इहशब्दोऽन्यस्थाने प्रयुक्तश्छन्दोभङ्गभयात्, एवं तु द्रष्टव्यः, न हिंस्याद्भूतानि 'इह' वेदे हिंसनं 'दोषकृन्मतं' पापकृदिदं स्पष्टमिति सम्बन्धः । निदर्शनमाह—'दाहवद्वैद्यके' इति यथा दाहो वैद्यके दुःखादिकरत्वेन दोषकृदिष्टस्तद्वदित्यर्थः । उभयत्र युक्तिमाह—'उत्सर्गप्रतिषेधतः' न दाहः कार्य इति प्रतिषेधस्य हिंस्याद्भूतानीति सामान्यप्रतिषेधात् ॥ १५८ ॥ यतश्चैवम्—

ततो व्याधिनिवृत्त्यर्थं, दाहः कार्यस्तु चोदिते । न ततोऽपि न दोषः स्यात्फलोद्देशेन चोदनात् ॥१५९॥

'तत' इत्यादि, ततः 'व्याधिनिवृत्त्यर्थं' व्याध्युपशमार्थं दाहः कार्यस्तु एवं चोदिते सति न 'ततोऽपि' दाहकरणान्न 'दोषः' दुःखादिकरत्वलक्षणः, किन्तु स्यादेव, कुतः ? इत्याह—'फलोद्देशेन' व्याधिनिवृत्तिफलोपन्यासेन 'चोदनात्' कारणात् ॥ १५९ ॥ दार्ष्टान्तिकयोजनामाह—'एव'मित्यादिना—

एवं तत्फलभावेऽपि, चोदनातोऽपि सर्वथा । ध्रुवमौत्सर्गिको दोषो, जायते फलचोदनात् ॥ १६० ॥

एवं 'तत्फलभावेऽपि' भूत्यादिभावेऽपीति भावः, चोदनातोऽपि सर्वथा ध्रुवमौत्सर्गिको दोषो जायते, पापकृत्त्वं, कुतः ? इत्याह—'फलोद्देशेन' भूत्याद्युपन्यासेन चोदनादिति ॥ १६० ॥ एवं प्रस्तुतागमपेक्षया दृष्टेष्टयोरुक्ततामभिधाय विधिमाह—

अन्येषामपि बुद्ध्यैवं, दृष्टेष्टाभ्यां विरुद्धता । दर्शनीया कुशास्त्राणां, ततश्च स्थितमित्यदः ॥ १६१ ॥

'अन्येषामपी'त्यादि, 'अन्येषामपि' एवंजातीयानामतिवादराणां 'बुद्ध्यैवम्' आत्मीययैव दृष्टेष्टाभ्यां विरुद्धता 'दर्शनीया' प्रतिपाद्या 'कुशास्त्राणाम्' आजीवकादिसम्बन्धिनां, ततश्च स्थितमित्यदः, यदुत स्वभाव एव इत्यादि पूर्ववत् ॥ १६१ ॥ आत्मन एव कर्त्तृत्वमित्याह–'क्लिष्ट'मित्यादिना—

क्लिष्टं हिंसाद्यनुष्ठानं, न यत्तस्यान्यतो मतम् । ततः कर्त्ता स एव स्यात्, सर्वस्यैव हि कर्म्मणः ॥१६२॥

'क्लिष्टं' रौद्रं हिंसाद्यनुष्ठानं न 'यत्' यस्मात्तस्मात् 'तस्य' आत्मनोऽन्यतः 'मतम्' इष्टं, किन्तु तत एव, यतश्चैवं 'ततः' तस्मात् कर्त्ता स एव स्यादात्मा 'सर्वस्यैव हि' हिताहितादेः कर्म्मण इति ॥ १६२ ॥ स्वयमेव कर्त्ता सन् कथमहिते प्रवर्त्तते? इति—

अनादिकर्म्मयुक्तत्वात्तन्मोहात्संप्रवर्त्तते । अहितेऽप्यात्मनः प्रायो, व्याधिपीडितचित्तवत् ॥ १६३ ॥

'अनादी'त्यादि, अनादिकर्मयुक्तत्वात्कारणान्न(त्तत्) 'मोहात्' कर्म्ममोहेन संप्रवर्त्तते, क्व? इत्याह–अहितेऽप्यात्मनः 'प्रायः' बाहुल्येन, निदर्शनमाह–व्याधिपीडितचित्तवदपथ्य इति ॥ १६३ ॥ वार्त्तान्तरमाह–'कालादीना'मित्यादिना—

कालादीनां च कर्त्तृत्वं, मन्यन्तेऽन्ये प्रवादिनः । केवलानां तदन्ये तु, मिथः सामग्र्यपेक्षया ॥ १६४ ॥

'तदन्ये तु' वादिनः 'मिथः' परस्परं सामग्र्यपेक्षया, समुदितानामेवेत्यर्थः ॥१५४॥ कालवादिमतमाह—'न काले'त्यादिना—

न कालव्यतिरेकेण, गर्भबालशुभादिकम् । यत्किञ्चिज्जायते लोके, तदसौ कारणं किल ॥ १६५ ॥

'न कालव्यतिरेकेण' न कालमन्तरेण गर्भबालशुभादिकं 'यत्' यस्मात्किञ्चिज्जायते लोके तदसौ—कालः कारणं किलेति ॥ १६५ ॥ एतदेव समर्थयन्नाह—

कालः पचति भूतानि, कालः संहरति प्रजाः । कालः सुप्तेषु जागर्ति, कालो हि दुरतिक्रमः ॥१६६॥

'काल' इत्यादि, कालः 'पचति भूतानि' परिणतिं नयतीत्यर्थः, कालः 'संहरति' प्रजाः पर्यायान्तरेण स्थापयति, कालः सुप्तेषु 'जागर्ति' आपदमपि रक्षति, एवं कालो हि 'दुरतिक्रमः' नान्यथा कर्तुं शक्यत इत्यर्थः ॥ १६६ ॥ कालस्यैव सामर्थ्यमाह—'किंचे'त्यादिना—

किं च कालादृते नैव, मुद्गपक्तिरपीष्यते । स्थाल्यादिसन्निधानेऽपि, ततः कालादसौ मता ॥ १६७ ॥

किञ्च—'कालादृते' कालमन्तरेण न—नैव मुद्गपक्तिरप्यासामर्थ्यात् 'स्थाल्यादिसन्निधानेऽपि' परेष्टकारणभावेऽपीत्यर्थः, यत एवं ततः कालादसौ मता, तन्निपातनाद्व्यतिरेकोपपत्तेः ॥ १६७ ॥ विपक्षे दोषमाह—'काले'त्यादिना—

कालाभावे च गर्भादि, सर्वं स्यादव्यवस्थया । परेष्टहेतुसद्भावमात्रादेव तदुद्भवात् ॥ १६८ ॥

कालाभावे सति किम्? इत्याह—गर्भादि कार्यं सर्वं 'स्यात्' भवेत् 'अव्यवस्थया' अनियमेन, कुतः? इत्याह—'परेष्टहेतु

सद्भावमात्रादेव' दांपत्यसंयोगादिमात्रादेव तदुद्भवात्, गर्भनिबन्धनं च बालादित्वं, तदपि; तदैवेत्यनवस्था ॥ १६८ ॥ स्वभाववादिमताभिधित्सयाऽऽह—

**न स्वभावातिरेकेण, गर्भबालशुभादिकम् । यत्किञ्चिज्जायते लोके, तदसौ कारणं किल ॥ १६९ ॥**

'ने'त्यादि, 'न स्वभावातिरेकेण' न स्वभावमन्तरेण गर्भबालशुभादिकं 'यत्' यस्मात्किञ्चिज्जायते लोके तत् 'असौ' स्वभावः कारणं किलेति ॥ १६९ ॥ एतदेवाभिधित्सुराह—

**सर्वभावाः स्वभावेन, स्वस्वभावे तथा तथा । वर्त्तन्तेऽथ निवर्त्तन्ते, कामचारपराङ्मुखाः ॥ १७० ॥**

'सर्वे'त्यादि, 'सर्वभावाः' सर्वपदार्थाः 'स्वभावेन' आत्मीयया सत्तया स्वस्वभावे—आत्मीयात्मीये भावे 'तथा तथा' तेन तेन प्रकारेण वर्त्तन्ते (अथ निवर्त्तन्ते) स्वभावेनैव, 'कामचारपराङ्मुखाः' अनियतभावनिरपेक्षाः ॥ १७० ॥ स्वभावस्यैव सामर्थ्यमाह—

**न विनेह स्वभावेन, मुद्गपक्तिरपीष्यते । तथाकालादिभावेऽपि, नाश्वमाषस्य सा यतः ॥ १७१ ॥**

'न विनेहे'त्यादि, न विना 'इह' लोके 'स्वभावेन' तथायोग्यतालक्षणेन मुद्गपक्तिरपीष्यते, 'तथाकालादिभावेऽपि' अभीष्टकालादिसंनिधानेऽपि सति नाश्वमाषकस्य—कङ्कटुकस्य सा—पक्तिर्यत इति ॥ १७१ ॥ विपक्षे दोषमाह—

**अतत्स्वभावात्तद्भावेऽतिप्रसङ्गोऽनिवारितः । तुल्ये तत्र मृदः कुम्भो, न पटादीत्ययुक्तिमत् ॥ १७२ ॥**

'अतत्स्वभावे'त्यादि अतत्स्वभावात्कारणात् 'तद्भावे' विवक्षितकार्यभावेऽतिप्रसङ्गो नाम दोषः सोऽनिवारितः, एतदेव स्पष्टयति–तुल्ये तत्र–अतत्स्वभावत्वे मृदः कारणात्कुम्भो भवति न पटादीत्येतदयुक्तिमदिति ॥ १७२ ॥ नियतिवादिमतमभिधित्सयाऽऽह—

**नियतेनैव रूपेण, सर्वे भावा भवन्ति यत्। ततो नियतिजा ह्येते, तत्स्वरूपानुवेधतः ॥ १७३ ॥**

'नियतेनैवे'त्यादि, 'नियतेनैव रूपेण' अन्यूनानतिरिक्तेन सर्वे 'भावाः' पदार्था भवन्ति 'यत्' यस्मात् तत्-तस्मात् 'नियतिजाः' तथाभूतवस्त्वान्तरजा एवैते 'तत्स्वरूपानुवेधतः' नियतिस्वरूपानुवेधात् ॥ १७३ ॥ एतदेवाभिधित्सुराह—

**यद्यदेव यतो यावत्तत्तदेव ततस्तथा। नियतं जायते न्यायात्, क एतां बाधितुं क्षमः ? ॥ १७४ ॥**

'यद्यदे'त्यादि, 'यत्' वस्तु 'यदेव' यस्मिन्नेव काले 'यतः' कारणात् 'यावत्' इति यावत्परिमाणं 'तत्' वस्तु 'तदेव' तस्मिन्नेव काले 'ततः' कारणात् 'तथा' तावत्परिमाणं नियतं जायते एव, नियतानि यतः कारणानीत्यभिप्रायः, एवं न्यायात्कः 'एतां' नियतिं बाधितुं क्षमः ?, नैव कश्चिदिति ॥ १७४ ॥ नियतेरेव सामर्थ्यमाह–'नचे'त्यादिना—

**न चर्ते नियतिं लोके, मुद्गपक्तिरपीक्ष्यते। तत्स्वभावादिभावेऽपि, नासावनियता यतः ॥ १७५ ॥**

'न चर्ते' न च विना नियतिमुक्तलक्षणां लोके मुद्गपक्तिरपीक्ष्यते, 'तत्स्वभावादिभावेऽपि' पक्तिस्वभावादिसन्निधानेऽपि नासौ पक्तिरनियता यतः, तद्विशेषेऽपि तद्रूपत्वेन नियतत्वात् ॥ १७५ ॥ विपक्षे दोषमाह—

अन्यथाऽनियतत्वेन, सर्वाभावः प्रसज्यते । अन्योऽन्यात्मकतापत्तेः, क्रियावैफल्यमेव च ॥ १७६ ॥

'अन्यथे'त्यादि, अन्यथा—यद्येवं नेष्यते ततोऽनियतत्वेन हेतुना सर्वाभावः प्रसज्यते, एते हि तत एव, तच्च तदन्यथा भवतीति प्राप्तं, न चैतद्देवमिति, तदन्यवदभीष्टस्याप्यभाव इति सर्वाभावः, तथाऽन्योन्यात्मकतापत्तेः, अनियतहेतुत्वेन घटपटादीनां, क्रियावैफल्यमेव च प्रसज्यते, घटार्थिनो मृद उपादानेऽपि तदभिमतत्वेन तदसिद्धेरिति, तथा नियतेन तत्त्वान्तरेण सर्वान्वयव्यतिरेकसिद्धेरिति भावनीयम् ॥ १७६ ॥ कर्म्मवादिमत आह—

न भोक्तृव्यतिरेकेण, भाग्यं जगति विद्यते । न चाकृतस्य भोक्ता स्यान्मुक्तानां भोगभावतः ॥१७७॥

'न भोक्तृ' इत्यादि, 'न भोक्तुर्व्यतिरेकेण' न भोक्तारमन्तरेण भाग्यं जगति विद्यते, सम्बन्धिशब्दत्वेन भोग्यत्वानुपपत्तेः, न चाकृतस्य-स्वयमनुपात्तस्य 'भोक्ता स्यात्' भोक्ता भवेत्, कुतः? इत्याह—'मुक्तानां' निष्ठितार्थानां 'भोगभावतः' भोगप्रसङ्गात् ॥ १७७ ॥ यदि नामैवं ततः किम्? इत्याह—

भोग्यं च विश्वं सत्त्वानां, विधिना तेन तेन यत्। दृश्यतेऽध्यक्षमेवेदं, तस्मात्तत्कर्मजं हि तत् ॥१७८॥

'भोग्यं चे'त्यादि, भोग्यं च 'विश्वं' जगत् सत्त्वानां 'विधिना' प्रकारेण तेन तेन यद् दृश्यते अध्यक्षमेवेदमविप्रतिपत्तिः(त्तेः), तस्मात्तत्कर्मजमेव तदिति ॥ १७८ ॥ एतदेव समर्थयति—'न चे'त्यादिना—

न च तत्कर्मवैधुर्ये, मुद्गपक्तिरपीक्ष्यते । स्थाल्यादिभङ्गभावेन, यत् क्वचिन्नोपपद्यते ॥ १७९ ॥

न च 'तत्कर्मवैगुण्ये' भोक्तृकर्मवैगुण्य इत्यर्थः, मुक्तपक्षिरपीष्यते, स्वास्थ्याविभङ्गभावेन 'यत्' यस्मात् कश्चिभोपजायते ॥ १७९ ॥ विपक्षे बाधामाह—

चित्रं भोग्यं तथा चित्रात्कर्म्मणोऽहेतुताऽन्यथा। तस्य यस्माद्विचित्रत्व, नियत्यादेर्न युज्यते ॥ १८० ॥

'चित्र'मित्यादि, चित्रं भोग्य नानाप्रकारं 'तथा' तेन प्रकारेण (चित्रात् कर्मणः—अदृष्टात्, अन्यथाऽहेतुता, तस्य भोग्यस्य यस्माद् एकरूपत्वात् विचित्रत्वं) नियत्यादेः सकाशान्न युज्यते ॥ १८० ॥ एतदेव भावयन्नाह—

नियतेर्नियतात्मत्वान्नियतानां समानता। तथाऽनियतभावे च, बलात्स्याद्विचित्रता ॥ १८१ ॥

'नियते'रित्यादि, 'नियतेः' एकलक्षणायाः 'नियतात्मत्वात्' एकस्वभावत्वात् 'नियतानां' कार्याणां 'समानता' तुल्यता, स्यादिति शेषः, 'तथा' तेन प्रकारेणासमानकार्यकारणरूपेण 'अनियतभावे च' अनवस्थितत्वे च सति नियतेरभ्युपगम्यमाने 'बलात्' सामर्थ्यादेव 'स्याद्विचित्रता' अपेक्षितनियतिवैचित्र्यं, हेतुभेदमन्तरेण फलभेदायोगादिति ॥ १८१ ॥ अस्त्वेवमपि न दोष एवेत्यत्राह—

न च तन्मात्रभावादेर्युज्यतेऽस्या विचित्रता। तदन्य(त्)भेदक मुक्त्वा, सम्यग्न्यायाविरोधत ॥ १८२ ॥

'न चे'त्यादि, न च 'तन्मात्रभावादेः' नियतिमात्रभावपरिणामाभ्यां सकाशात् 'युज्यते' घटते 'अस्याः' नियतेः विचित्रता 'तदन्यत्' नियतिभिन्नं 'भेदकं' वस्तु 'मुक्त्वा' विहाय सम्यग्न्यायाविरोधतः, नाबीज किञ्चिद्भवतीति सत्या वा विरोधित्यर्थः ॥ १८२ ॥ एतदेव स्पष्टयन्नाह—

न जलस्यैकरूपस्य, वियत्पाताद्विचित्रता । ऊषरादिधराभेदमन्तरेणोपजायते ॥ १८३ ॥

'न जले'त्यादि, न जलस्यैकरूपस्य सतो जलत्वेन 'वियत्पातेन' विचित्रता वर्णादिभेदेन 'ऊषरादिधराभेदं' ऊषरेतरपृथिवीभेदमन्तरेणोपजायते, सकललोकसिद्धमेतत् ॥ १८३ ॥ यदि नामैवं ततः किम्? इत्याह—

तद्भिन्नभेदकत्वे च, तत्र तस्या न कर्तृता । तत्कर्तृत्वे च चित्रत्वं, तद्वत्तस्याप्यसङ्गतम् ॥ १८४ ॥

'त'दित्यादि, 'तद्भिन्नभेदकत्वे च' नियतिभिन्नभेदकभावे चाभ्युपगम्यमाने 'तत्र' भेदके 'तस्याः' नियतेः न कर्तृता, तद्व्यतिरेकेण सामर्थ्याभावात्, तत्कर्तृत्वे च चित्रत्वं 'तद्वत्' नियतिवत् 'तस्यापि' भेदकस्य असङ्गतं, कारणसरूपत्वं कार्यस्येति ॥ १८४ ॥ पराभिप्रायमाशङ्क्य परिहरन्नाह—

तस्या एव तथाभूतः, स्वभावो यदि चेष्यते । त्यक्तो नियतिवादः स्यात्, स्वभावाश्रयणान्ननु ॥ १८५ ॥

'तस्याः' इत्यादि, 'तस्या एव' नियतेः 'तथाभूतः' विचित्रभेदकजननरूपः स्वभावः—स्वसत्तालक्षणो यदि चेष्यते परेण ततः को दोषः? इत्याह—त्यक्तो नियतिवादः स्यात्, कथम्? इत्याह—स्वभावाश्रयणान्ननु ॥ १८५ ॥ केवलभेदकस्वभाववादस्याप्यसाधुतामाह—

स्वो भावश्च स्वभावोऽपि, स्वसत्तैव हि भावतः । तस्यापि भेदकाभावे, वैचित्र्यं नोपपद्यते ॥ १८६ ॥

'स्वो भाव' इत्यादि, 'स्वः' आत्मीयो भावोऽपि भण्यते स्वसत्तैव हि 'भावतः' परमार्थतः, 'तस्यापि' स्वभावस्य भेदकाभावे सति वैचित्र्यं नोपपद्यते, स्वसत्ताऽविशेषात् ॥ १८६ ॥ यदि नामैवं ततः किम्? इत्याह—

ततस्तस्याविशिष्टत्वाद्युगपद्विश्वसम्भवः । न चासाविति सद्युक्त्या, तद्वादोऽपि न सङ्गतः ॥ १८७ ॥

'ततः' इत्यादि, ततः 'तस्य' स्वभावस्याविशिष्टत्वात्कारणात् 'युगपत्' एकदैव विश्वसम्भवः, प्राप्नोति ततो भवितव्यं, न चासौ विश्वसम्भवः इत्येवं सद्युक्त्या तद्वादोऽपि न सङ्गत इति ॥ १८७ ॥ पराभिप्रायमाशङ्क्य परिहरन्नाह—

तत्तत्कालादिसापेक्षो, विश्वहेतुः स चेन्ननु । मुक्तः स्वभाववादः स्यात्, कालवादपरिग्रहात् ॥ १८८ ॥

तत्तत्कालादिसापेक्षः सन् विश्वहेतुः स चेत् स्वभावो नन्वेवं मुक्तः स्वभाववादः 'स्यात्' भवेत्, कालवादपरिग्रहादिति ॥ १८८ ॥ केवलकालवादपरिजिहीर्षयाऽऽह—

कालोऽपि समयादिर्यत्केवलः सोऽपि कारणम् । तत एव ह्यसम्भूतेः, कस्यचिन्नोपपद्यते ॥ १८९ ॥

'कालोऽपी'त्यादि, कालोऽपि समयादिः 'यत्' यस्मात्केवलः सोऽपि—कालः कारणं तत एव हि कालादसम्भूतेः कस्यचिद्वस्तुनो नोपपद्यत इति ॥ १८९ ॥ दोषान्तरमाह—'यतश्चे'त्यादिना—

यतश्च काले तुल्येऽपि, सर्वत्रैव न तत्फलम् । अतो हेत्वन्तरापेक्षं, विज्ञेयं तद्विचक्षणैः ॥ १९० ॥

यतश्च काले तुल्येऽपि सति 'सर्वत्रैव' कर्षकादौ न तत्फलं तुल्यमतो हेत्वन्तरापेक्षं, न तावन्मात्रजं, 'विज्ञेयम्' एवं
ज्ञातव्यं 'तत्' फलं 'विचक्षणैः' पण्डितैरिति ॥ १९० ॥ उपसंहारमाह—
अतः कालादयः सर्वे, समुदायेन कारणम् । गर्भादेः कार्यजातस्य, विज्ञेया न्यायवादिभिः ॥ १९१ ॥
'अतः' इत्यादि, अतः कालादयः 'सर्वे' अनन्तरोक्ताः समुदायेन कारणं, न प्रत्येकं, कस्य? इत्याह—गर्भादेः कर्म्मजा-
तस्य—फलजातेः विज्ञेया न्यायवादिभिरिति ॥ १९१ ॥ एतदेव द्रढयन्नाह—
न चैकैकत एवेह, क्वचित्किञ्चिदपीक्ष्यते । तस्मात्सर्वस्य कार्यस्य, सामग्री जनिका मता ॥ १९२ ॥
'नचे'त्यादि, न चैकैकत एवेह—कालादेः क्वचित्किञ्चिदपीक्ष्यते, कार्यजातं, यस्मादेवं तस्मात्सर्वस्य कार्यस्य नियम
एवायं यदुत—सामग्री जनिका मतेति ॥ १९२ ॥ अत्रैव मतभेदमाह—'स्वभाव' इत्यादिना—
स्वभावो नियतिश्चैव, कर्मणोऽन्ये प्रचक्षते । धर्मावन्ये तु सर्वस्य, सामान्येनैव वस्तुनः ॥ १९३ ॥
स्वभावो नियतिश्चैवेत्येतद्द्वयमपि कर्म्मणः 'अन्ये' आचार्याः प्रचक्षते धर्म्मौ, अन्ये तु सर्वस्य सामान्येनैव वस्तुनः,
एतौ धर्माविति ॥ १९३ ॥ वार्त्तान्तरमभिधित्सुराह—
ईश्वरः प्रेरकत्वेन, कर्त्ता कैश्चिदिहेष्यते । अचिन्त्यचिच्छक्तियुक्तोऽनादिशुद्धश्च सूरिभिः ॥ १९४ ॥

'ईश्वरः' इत्यादि, 'ईश्वरः' आत्मविशेषः प्रेरकत्वेन हितादौ कर्ता कैश्चिदिष्यते 'सूरिभिः' पण्डितैरिति योगः, 'अचिन्त्यचिच्छक्तियुतः' अचिन्त्यज्ञानसामर्थ्योपेतः, अनादिशुद्धश्च, सदैवाकर्मेत्यर्थः ॥ १९४ ॥ एतदेवाह–'ज्ञान'मित्यादिना–

ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च, सहसिद्धं चतुष्टयम् ॥ १९५ ॥

ज्ञानम् 'अप्रतिघं' सर्वत्राप्रतिहतं यस्य, वैराग्यं च जगत्पतेः, अप्रतिघमेव, ऐश्वर्यं चैव–अणिमाद्यप्रतिघं, धर्मश्च–प्रयत्नसंस्काररूपोऽप्रतिघः, एतत्सहसिद्धं चतुष्टयम्, अनाद्येवेति भावः ॥ १९५ ॥ अस्य कर्तृ[त्व]त्वमाह–'अज्ञ' इत्यादिना,

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्, स्वर्गं वा श्वभ्रमेव वा ॥ १९६ ॥

अज्ञो जन्तुः–विवेकशून्यः, 'अनीशोऽयम्' अप्रभुरयमात्मनः सुखदुःखयोः कर्तव्ययोः, प्रतिकूलप्रवृत्तिदर्शनात्, ज्ञस्य च तद्योगात्, तत्त्वतो ज्ञत्वानुपपत्तेः, यतश्चैवमत ईश्वरप्रेरितः सन् गच्छेत् स्वर्गं वा 'श्वभ्रमेव वा' नरकं वेति ॥ १९६ ॥ वार्त्तान्तरामभिधित्सयाऽऽह—

अन्ये त्वभिदधत्यत्र, वीतरागस्य भावतः । इत्थं प्रयोजनाभावात्, कर्तृत्वं युज्यते कथम् ? ॥ १९७ ॥

'अन्ये' इत्यादि, अन्ये त्वभिदधति 'अत्र' वस्तुनि वीतरागस्य भावतः 'इत्थं' यथोक्तं, यथोक्तप्रेरकत्वे, प्रयोजनाभावात् हेतोः कर्तृत्वं युज्यते कथं?, नैवेत्यर्थः ॥ १९७ ॥ एतदेव स्पष्टयन्नाह—

नरकादिफले काँश्चित्काँश्चित्स्वर्गादिसाधने । कर्मणि प्रेरयत्याशु, स जन्तून् केन हेतुना ? ॥ १९८ ॥

'नरकादी'त्यादि, 'नरकादिफले' प्राणातिपातादौ काँश्चित् काँश्चित्स्वर्गादिसाधने–दानादौ कर्मणि प्रेरयति 'आशु' शीघ्रं 'सः' ईश्वरः 'जन्तून्' प्राणिनः केन हेतुनेति ॥ १९८ ॥ पराभिप्रायमाशङ्क्य परिहरन्नाह—

**स्वयमेव प्रवर्त्तन्ते, सत्त्वाश्चेच्चित्रकर्मणि । निरर्थकमिहेशस्य, कर्तृत्वं गीयते कथम् ? ॥ १९९ ॥**

'स्वयमेवे'त्यादि, 'स्वयमेव' आत्मनैव प्रवर्त्तन्ते सत्त्वाश्चेत् 'चित्रकर्मणि' प्राणातिपातादौ 'निरर्थकं' निष्प्रयोजनमिहेशस्य कर्तृत्वं 'गीयते' शब्द्यते कथ? मिति ॥ १९९ ॥ पराभिप्रायमाह–'फलं दे'त्यादिना—

**फलं ददाति चेत्सर्वं, तत्तेनेह प्रचोदितम् । अफले पूर्वदोषः स्यात्, सफले भक्तिमात्रता ॥ २०० ॥**

फलं ददाति चेत्सर्वं तत्–कर्म तेनेह प्रचोदितमीश्वरेण, एतदप्यसद्, विकल्पायोगात्, तत्त्वे(त् ते)न सफलं वा कृतं स्यादफलं वा?, किं चात इत्याह–'अफले पूर्वदोषः स्यात्' चित्रफलदापनेऽवीतरागता, 'सफले भक्तिमात्रता' ईश्वरे, हरीतकीविरेकन्यायात् ॥ २०० ॥ आदिसर्गस्तत्कृत इति निराकुर्वन्नाह—

**आदिसर्गेऽपि नो हेतुः, कृतकृत्यस्य विद्यते । प्रतिज्ञातविरोधित्वात्स्वभावोऽप्यप्रमाणकः ॥ २०१ ॥**

'आदी'त्यादि, आदिसर्गेऽपि कर्त्तव्ये नो हेतुः कश्चित् 'कृतकृत्यस्य' ईशस्य विद्यते, प्रतिज्ञातविरोधित्वात्, कृतकृत्यस्य प्रयोजनाभावात् एवंभूत एवास्य स्वभाव इति स्वभावोऽप्यप्रमाणक एव, किञ्च–(नच)कर्मसर्गयोरेवैष स्वभावो यदुतेश्वरप्रेरितमेव कर्म फलति सर्गोऽपि भवतीति ॥ २०१ ॥ किञ्चातः—

कर्मादिस्तत्स्वभावत्वे, न किञ्चिद्बाध्यते विभो । विभोस्तु तत्स्वभावत्वे, कृतकृत्यत्वबाधनम् ॥ २०२ ॥

'कर्मादे'रित्यादि, 'कर्मादेः' कर्मादिसर्गयोः 'तत्स्वभावत्वे' ईश्वरानपेक्षफलदानस्वभावत्वे न किञ्चिद्बाध्यते 'विभोः' ईश्वरस्य, किन्त्वनुपकारिणः कर्तृत्वमपि न सिध्यतीत्यभिप्रायः, विभोस्तु 'तत्स्वभावत्वे' कर्मफलदापनादिसर्गकरणस्वभावत्वे कृतकृत्यत्वबाधनं, तत्सम्पादनेनानिष्ठितार्थत्वादिति ॥ २०२ ॥ एवं प्रत्ययादौ एव काश (कर्तृवादोऽनवकाश) इति गम्यमान इत्याह (इत्याह)—

ततश्चेश्वरकर्तृत्ववादोऽयं युज्यते परम् । सम्यग्न्यायाविरोधेन, यथाऽऽहुः शुद्धबुद्धय ॥ २०३ ॥

'ततश्चे'त्यादि, ततश्चेश्वरकर्तृत्ववादोऽयं लोकप्रसिद्धो युज्यते परं सम्यग्न्यायाविरोधेन, कथम् ? इत्याह—यथाऽऽहुः शुद्धबुद्धयः—शापय इति ॥ २०३ ॥ एतदेव दर्शयति—'ईश्वर' इत्यादिना—

ईश्वरः परमात्मैव, तदुक्तव्रतसेवनात् । यतो मुक्तिस्ततस्तस्याः, कर्ता स्याद्गुणभावतः ॥ २०४ ॥

ईश्वरः परमात्मैव, यः कश्चित्सर्वज्ञः, 'तदुक्तव्रतसेवनात्' अहिंसादिपालनादिरूपात्, यतो मुक्तिर्भवति ततस्तस्याः—मुक्तेः कर्ता स्यात् (गुणभावतः—निमित्तत्वेन कर्तृत्वोपचारात्) ॥ २०४ ॥

तदनासेवनादेव, यत्संसारोऽपि तत्त्वत । तेन तस्यापि कर्तृत्वं, कल्प्यमानं न दुष्यति ॥ २०५ ॥

'तदे'त्यादि, 'तदनासेवनादेव' तदुक्तव्रतापालनादेव यत् संसारोऽपि तत्त्वतः जीवस्य 'तेन' हेतुना 'तस्यापि' संसारस्यापि कर्तृत्वं कल्प्यमानं न दुष्यति ॥२०५॥ कर्तृत्वं कल्प्यमानमपायदर्शनेन न दुष्यतीति कल्पनागुणमाह—'कर्तायं'मित्यादिना—

कर्त्ताऽयमिति तद्वाक्यै, यतः केषाञ्चिदादरः । अतस्तदानुगुण्येन, तस्य कर्त्तृत्वदेशना ॥ २०६ ॥

कर्त्ताऽयम्–ईश्वर इति तद्वाक्ये यतः 'केषाञ्चित्' तथाविधविनेयानामादरो भवति अतः 'तदानुगुण्येन' तथाविधविनेयानुगुण्यतः 'तस्य' परमात्मनः कर्त्तृत्वदेशनेति ॥ २०६ ॥ अस्यैव वादस्य निबन्धनान्तरमभिधित्सुराह—

परमैश्वर्ययुक्तत्वान्मत आत्मैव चेश्वरः । स च कर्त्तेति निर्दोषः, कर्त्तृवादो व्यवस्थितः ॥ २०७ ॥

'परमे'त्यादि, 'परमैश्वर्ययुक्तत्वात्' केवलश्रियमधिकृत्य मत आत्मैव चेश्वरः, स च कर्त्तेत्येवं निर्दोषः कर्त्तृवादो व्यवस्थित इति ॥ २०७ ॥ एवं सर्वत्र शास्त्रकाराभिप्रायो मृग्य इति तत्स्तवमाह–'शास्त्रे'त्यादिना—

शास्त्रकारा महात्मानः, प्रायो वीतस्पृहा भवे । सत्त्वार्थसंप्रवृत्ताश्च, कथं तेऽयुक्तभाषिणः? ॥ २०८ ॥

शास्त्रकारा महात्मानः 'प्रायः' बाहुल्येन लोकायतादीन् विहाय वीतस्पृहा 'भवे' संसारे 'सत्त्वार्थसंप्रवृत्ताश्च' परोपकारिण इति कथं तेऽयुक्तभाषिणो?, नैवेत्यर्थः ॥ २०८ ॥ यतश्चैवमतः—

अभिप्रायस्ततस्तेषां सम्यग् मृग्यो हितैषिणा । न्यायशास्त्राविरोधेन, यथाऽऽह मनुरप्यदः ॥ २०९ ॥

'अभिप्रायः' इत्यादि, अभिप्रायस्ततस्तेषां–शास्त्रकाराणां सम्यग्मृग्यो हितैषिणा आत्मनः, कथम्? इत्याह—'न्यायशास्त्राविरोधेन', न्याय्यमिदं, यथाऽऽह मनुरप्यदः ॥ २०९ ॥ एतत्किमाह? इत्याह—

आर्षं च धर्मशास्त्रं च, वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते, स धर्मं वेद नेतरः ॥ २१० ॥

'आर्ष'मित्यादि, आर्षं च—वेदादि धर्मशास्त्रं च—पुराणादि 'वेदशास्त्राविरोधिना' एतत्प्रामाण्ये सति परस्पराविरोधिना तर्केणोहेन, तत्र(स्त्र) युक्तिलक्षणेन 'अनुसन्धत्ते' तदुक्तानुसन्धानं करोति स धर्मं 'चिन्वते' जानाति, 'नेतरः' ऊहरहित इति ॥ २१० ॥ वार्तान्तराभिधित्सयाऽऽह—

प्रधानोद्भवमन्ये तु, मन्यन्ते सर्वमेव हि । महदादिक्रमेणेह, कार्यजातं विपश्चित ॥ २११ ॥
प्रधानात् महतो भावोऽहङ्कारस्य ततोऽपि च । अक्षतन्मात्रवर्गस्य, तन्मात्राद्भूतसंहतेः ॥ २१२ ॥
घटाद्यपि पृथिव्यादिपरिणामसमुद्भवम् । नात्मव्यापारजं किञ्चित्तेषां लोकेऽपि विद्यते ॥ २१३ ॥

'प्रधाने'त्यादि, प्रधत्ते प्रधीयते वाऽधिकारा अस्मिन्निति प्रधानं—सत्त्वादिसाम्यावस्थाविलक्षणं तदुद्भवमन्ये तु सांख्या मन्यन्ते सर्वमेव हि लोकान्तर्गतं, महदादिक्रमेणेह वक्ष्यमाणलक्षणेन कार्यजातं 'विपश्चितः' पण्डिता इति ॥ २११ ॥ एतदेवाह—'प्रधाने'त्यादिना, प्रधानात् सकाशात् 'महतः' सत्त्वस्य बुद्धितत्त्वस्य भावः अभिव्यक्तिरूपः, अहङ्कारस्य—वैकारिकादेः 'ततोऽपि च' महतः, तथा ततोऽपि—अहङ्कारात् 'अक्षतन्मात्रवर्गस्य' अक्षाणि—एकादशेन्द्रियाणि बुद्धीन्द्रियादीनि तन्मात्राणि—पञ्च शब्दतन्मात्रादीनि, तन्मात्रेभ्यो भूतसंहतेः—आकाशादिलक्षणाया इति ॥ २१२ ॥ स्थूलं कार्यमधिकृत्याह—'घटाद्यपी'त्यादि, घटाद्यपि कार्यजातं पृथिव्यादिपरिणामसमुद्भवं, परिणामात्परिणामान्तरात्, सर्वथा नात्मव्यापारजं किञ्चित्तेषां—सांख्यानां लोकेऽपि विद्यते, अकर्तृत्वादात्मन इति ॥ २१३ ॥ वार्तान्तरमाह—'अन्ये'त्यादिना—

अन्ये तु ब्रुवते ह्येतत्, प्रक्रियामात्रवर्णनम् । अविचार्यैव तद्युक्त्या, श्रद्धया गम्यते परम् ॥ २१४ ॥
युक्त्या तु बाध्यते यस्मात्, प्रधानं नित्यमिष्यते। तथात्वाप्रच्युतौ चास्य, महदादि कथं भवेत्? ॥२१५॥
तस्यैव तत्स्वभावत्वादिति चेत्किं न सर्वदा?। अत एवेति चेत् तस्य, तथात्वे ननु तत्कुतः? ॥२१६॥
नानुपादानमन्यस्य, भावेऽन्यज्जातुचिद्भवेत् । तदुपादानतायां च, न तस्यैकान्तनित्यता ॥ २१७ ॥
घटाद्यपि कुलालादिसापेक्षं दृश्यते भवत् । अतो न तत्पृथिव्यादिपरिणामैकहेतुकम् ॥ २१८ ॥
तत्रापि देहः कर्त्ता चेन्नैवासावात्मनः पृथक् । पृथगेवेति चेद्भोग, आत्मनो युज्यते कथम्? ॥ २१९ ॥
देहभोगेन नैवास्य, भावतो भोग इष्यते । प्रतिबिम्बोदयात्किन्तु, यथोक्तं पूर्वसूरिभिः ॥ २२० ॥
पुरुषोऽविकृतात्मैव, स्वनिर्भासमचेतनम् । मनः करोति सान्निध्यादुपाधिः स्फटिकं यथा ॥ २२१ ॥
विभक्तेदृक्परिणतौ, बुद्धौ भोगोऽस्य कथ्यते। प्रतिबिम्बोदयः स्वच्छे, यथा चन्द्रमसोऽम्भसि ॥२२२॥
प्रतिबिम्बोदयोऽप्यस्य, नामूर्त्तत्वेन युज्यते । मुक्तैरतिप्रसङ्गाच्च, न वै भोगः कदाचन ॥ २२३ ॥
न च पूर्वस्वभावत्वात्, स मुक्तानामसङ्गतः । स्वभावान्तरभावे च, परिणामोऽनिवारितः ॥ २२४ ॥

देहास्पृष्टस्य एवास्य, न च हिंसादयः क्वचित्। तदभावेऽनिमित्तत्वात्, कथं बन्ध शुभाशुभः ? ॥२२५॥
बन्धादृते न संसारो, मुक्तिर्वाऽस्योपपद्यते। यमादि तदभावे च, सर्वमेव ह्यपार्थकम् ॥ २२६ ॥

'अन्ये तु' सौगतादयो ब्रुवते ह्येतत्—अनन्तरोदितं प्रक्रियामात्रवर्णनं, न तात्त्विकमेव, यस्मादेवमविचार्यैव तत्– तस्माद् युक्त्या श्रद्धया गम्यते परं, नान्य उपाय इति ॥२१४॥ एतदेवाह–'युक्त्या त्वि'त्यादिना—युक्त्या तु बाध्यते, कथमित्याह–यस्मात्प्रधानं नित्यमिष्यते तैर्वादिभिः, तथात्वाभ्युपगमे च अस्य–प्रधानस्य महदादि कथं भवेत् ?, न युज्यत इत्यर्थः ॥ २१५ ॥ पराभिप्रायमाह–'तस्यैवे'त्यादिना—'तस्यैव' प्रधानस्य 'तत्स्वभावत्वात्' सन्निधानमात्रेण महदादि जननस्वभावत्वादिति, एवं चेन्महदादि भवेत्तत्राह–किं न सर्वदा भवति ?, तत्स्वभावस्याविशेषात्, अत एव–तस्यैव तत्स्व भावत्वात्–कदाचिदेव सन्निधानमात्रेण महदादिजननस्वभावत्वादिति चेदत्राह–'तस्य' प्रधानस्य 'तथात्वे' स्वरूपनिय तत्वेऽविकृतत्वे सति ननु 'तत्' महदादि 'कुत' कस्मादुपादानात् ?, नास्ति उपादानमित्यर्थः ॥ २१६ ॥ उपचयामि पितमपाऽऽह—न अनुपादान तथाभाविकारणविकलम् 'अन्यस्य' सर्वथा तथाभावव्यतिरिक्तस्य प्रधानस्य भावे सति 'अन्यत्' एकान्ताविद्यमान महदादि 'जातुचित्' कदाचित् भवेत्, सर्वथाऽसतः सत्ताऽयोगात्, तदुपादानतायां च महदादेरभ्युपगम्यमानायां न 'तस्य' प्रधानस्य एकान्तनित्यता, तस्यैव तथाभवनादिति ॥ २१७ ॥ स्थूलमपि सकर्तृक मिति प्रतिपादयन्नाह—घटाद्यपि कार्यं कुलालादिसापेक्ष सत् उपपद्यते 'भवत्' उत्पद्यमाने मतभेदतो न घटादि प्रति

कर्तृहेतुकमपि ॥ २१८ ॥ अत्रैवाक्षेपपरिहाराभिधित्सयाऽऽह—'तत्रापी'त्यादि,
व्यादिपारिणामैकहेतुकं, किं तर्हि?, कर्तृहेतुकमपि ॥ २१८ ॥ अत्रैवाक्षेपपरिहाराभिधित्सयाऽऽह—'तत्रापी'त्यादि, नात्मा, अत्रोत्तरं-नैवासौ-देहः आत्मनः पृथक्, सर्वगतत्वादात्मनोऽसर्वगतत्वाच्च
'तत्रापि' घटादौ देहः कर्त्ता चेत्, नात्मा, अत्रोत्तरं-भोग आत्मनो युज्यते कथं?, सर्वथा देहभेदेऽस्य मुक्तकल्पत्वादिति ॥ २१९ ॥ परा·
देहस्य पृथगेवेति चेत्, अत्रोत्तरं-भोग आत्मनो युज्यते कथं?, सर्वथा देहभेदेऽस्य मुक्तकल्पत्वादिति ॥ २१९ ॥ परा·
भिप्रायमाह-'देह' इत्यादिना, देहेन भोगो देहभोगस्तेन नैव 'अस्य' आत्मनः 'भावतः' परमार्थतः भोग इष्यते,
प्रतिविम्बोदयेनेष्यते यथोक्तं पूर्वसूरिभिः-विन्ध्यवास्यादिभिरिति ॥२२०॥ यदुक्तं तदाह—'पुरुषः' इत्यादि, 'पुरुषः'
आत्मा 'अविकृतात्मैव' नित्य एव, 'स्वनिर्भासं' स्वाकारम् 'अचेतनं' चैतन्यशून्यं 'मनः करोति' अन्तःकरणं करोति
'सान्निध्यात्' संनिधानमात्रेण, निदर्शनमाह-'उपाधिः' पद्मरागादिः 'स्फटिकम्' उपलविशेषं यथा स्वनिर्भासं करोति
तद्वदिति ॥ २२१ ॥ यदि नामैवं ततः किमित्याह—'विभक्ते'त्यादि, विभक्ता चात्मन ईदृक्परिणतिश्चेति विग्रहः तस्यां
'बुद्धौ' अन्तःकरणलक्षणायां भोगः 'अस्य' पुरुषस्य कथ्यते आसुरिप्रभृतिभिः, किंवदित्याह-'प्रतिबिम्बोदयः' प्रति-
विम्बपरिणामः 'स्वच्छे' निर्मले चन्द्रमसः वास्तवस्य 'अम्भसि' उदके तद्वदिति ॥ २२२ ॥ उत्तरमाह—'प्रती'त्यादि,
प्रतिविम्बोदयोऽपि 'अस्य' आत्मनः नामूर्त्तत्वेन हेतुना युज्यते, मुक्तेरतिप्रसङ्गाच्च, तेषां प्रतिविम्बाभावात्, न वै
भोगः कदाचन, सर्वदैकस्वभावत्वात् ॥ २२३ ॥ दोषान्तराभिधित्सयाऽऽह—'नचे'त्यादि, न च नित्यत्वेन पूर्वस्वभाव-
त्यात्कारणात् 'सः' प्रतिविम्बोदयनिमित्तस्वभावो मुक्तानामसङ्गत एव, नित्यत्वक्षतेः, एवमपि न वै भोगः कदाचन,
किन्तु सर्वदैव, स्वभावान्तरभावे च मुक्तानामिष्यमाणे परिणामोऽनिवारितः, अमुक्तस्वभावत्यागतः स्वभावान्तराङ्गीक-

रणात्, अभ्युपगमे चायिमतिपत्तिः ॥ २२४ ॥ दोषान्तरमाह—'देहा'दित्यादिना, देहात्पृथक्त्व एवास्य—आत्मनः न च हिंसादयः, आविरभ्यादनुग्रहादिपरिग्रहः, कश्चित् यत्रापीष्यते, 'तदभावे' हिंसाद्यभावेऽनिमित्तत्वात्कारणात्कथं बन्धः शुभोऽशुभो(वा)?, नैवेत्यर्थः ॥ २२५ ॥ यदि नामैवं ततः किमित्याह—'बंधे'त्यादि, बन्धादृते न संसारः—देहादिरूपः, मुक्तिर्वाऽस्य—पुरुषस्योपपद्यते, अबद्धत्वात्, यमादि अनुष्ठानं 'तदभावे च' मुक्त्यभावे च सर्वमेव ह्यपार्थकं, (क्लेशफलत्वात्) साध्यार्थशून्यत्वाच्च ॥ २२६ ॥ पराभिप्रायमाह—'आत्मे'त्यादिना—

आत्मा न बध्यते नापि, मुच्यतेऽसौ कदाचन । बध्यते मुच्यते चापि, प्रकृतिः स्वात्मनेति चेत् ॥२२७॥
एकान्तेनैकरूपाया, नित्यायाश्च न सर्वथा । तस्या क्रियान्तराभावाद्बन्धमोक्षौ तु युक्तित ॥ २२८ ॥
मोक्ष प्रकृत्ययोगो यदतोऽस्या स कथ भवेत्? । स्वरूपविगमापत्तेस्तथा तन्त्रविरोधत ॥ २२९ ॥
पञ्चविंशतितत्त्वज्ञो, यत्र तत्राश्रमे रत । जटी मुण्डी शिखी वापि, मुच्यते नात्र सशय ॥ २३० ॥
पुरुषस्योदिता मुक्तिरिति तन्त्रे चिरन्तने । इत्थ न घटते चेयमिति सर्वमयुक्तिमत् ॥ २३१ ॥

आत्मा न बध्यते, पुण्यपापाभ्यां, नापि मुच्यतेऽसौ कदाचन, अबद्धत्वादेव, किं तर्हि?, बध्यते मुच्यते चापि 'प्रकृतिः' सत्त्वादिसाम्यलक्षणा 'स्वात्मना' बन्धात्मनेति चेदत्राह—'एकान्तेने'त्यादि, एकान्तेनैकरूपायाः प्रकृतेर्नित्यायाश्च न सर्वथा तस्याः क्रियान्तराभावात् बन्धनाभावाच्च बन्धमोक्षौ तु युक्तितः ॥ २२७-२२८ ॥ दोषान्तरमाह—'मोक्ष' इत्यादिना—

मोक्षः प्रकृत्ययोगो यत् 'प्रकृतिवियोगो मोक्ष' इति वचनादतोऽस्याः—प्रकृतेः स कथं भवेत् मोक्षः ?, 'स्वरूपविगमापत्तेः' प्रकृतिस्वरूपनिवृत्तिप्रसङ्गात्, तथा 'तन्त्रविरोधतः' स्वसिद्धान्तप्रकोपात् ॥ २२९ ॥ एतदेवोपदर्शयन्नाह—'पञ्चविंशती'त्यादि, 'पञ्चविंशतितत्त्वज्ञः' प्रकृतिमहदादिज्ञाता यत्र तत्राश्रमे रतः, परिव्राजकादौ, जटी मुण्डी शिखी वापि मुच्यते, बाह्यलिङ्गमत्राकारणं, नात्र संशयः, एवमेवैतदित्यर्थः ॥ २३० ॥ एवं 'पुरुषस्ये'त्यादिना मुक्तिरिति, तत्रै(वै)व पूर्वाचार्यैश्चिरन्तनैः, इत्थं न घटते चेयं, युक्तिविरोधादिति सर्वमयुक्तिमत् ॥ २३१ ॥ वार्त्तान्तरमाह—

अत्रापि पुरुषस्यान्ये, मुक्तिमिच्छन्ति वादिनः । प्रकृतिं चापि सन्न्यायात्कर्म्मप्रकृतिमेव हि ॥ २३२ ॥
तस्याश्चानेकरूपत्वात्परिणामित्वयोगतः । आत्मनो बन्धनत्वाच्च, नोक्तदोषसमुद्भवः ॥ २३३ ॥

'अत्रापी'त्यादि, अत्रापि वादे पुरुषस्यान्ये मुक्तिमिच्छन्ति 'वादिनः' जैनाः, प्रकृतिं चापि 'सन्न्यायात्' सन्न्यायेन कर्मप्रकृतिमेव हीच्छन्ति ॥ २३२ ॥ अत्र दोषाभावमाह,—'तस्याश्चे'त्यादिना, 'तस्याश्च' कर्म्मप्रकृतेः अनेकरूपत्वात्, चित्रत्वादित्यर्थः, 'परिणामित्वयोगतः' परिणामित्वोपपत्तेः आत्मनो बन्धनत्वाच्च, भेदे सति तत्स्वभावत्वेन 'नोक्तदोषसमुद्भवः' न परपक्षोक्तदोषापत्तिरिति ॥ २३३ ॥ परमताभिधित्सयाऽऽह—

नामूर्त्तं मूर्त्ततां याति, मूर्त्तं न यात्यमूर्त्तताम् । यतो बन्धाद्यतो न्यायादात्मनोऽसङ्गतं तथा ॥ २३४ ॥
देहस्पर्शादिसंवित्त्या, न यात्येवेत्ययुक्तिमत् । अन्योऽन्यव्याप्तिजा चेयमिति बन्धादि सङ्गतम् ॥२३५॥

मूर्त्तयाऽप्यात्मनो योगो, घटेन नभसो यथा । उपघातादिभावश्च, ज्ञानस्येव सुरादिना ॥ २३६ ॥
एवं प्रकृतिवादोऽपि, विज्ञेयः सत्य एव हि । कपिलोक्तत्वतश्चैव, दिव्यो हि स महामुनिः ॥ २३७ ॥

'नामूर्त्त'मित्यादि, नामूर्त्तं मूर्त्ततां याति, आकाशादौ तथाऽदर्शनात्, मूर्त्तं न यात्यमूर्त्ततां, परमाण्वादिषु तथाभावा-सिद्धेः, 'यत' यस्मादेवं न स्वरूपविपर्ययो भवति बन्धादि अतो न्यायात्–बन्धमोक्षाद्यसम्भवकारणात् न्यायेन–युक्त्या 'आत्मन' जीवस्यासङ्गत्वं 'तया' कर्मप्रकृत्या, उभयोः स्वस्वभावनियतत्वादिति ॥ २३४ ॥ अत्रोत्तरमभिधित्सुराह–'देहे'त्यादि, 'देहस्पर्शादिसंवित्त्या' देहे स्पृष्टे ताडिते वा संवित्तिरुपजायत इति न यात्येवेत्ययुक्तिमत्, अमूर्त्तमपि कथञ्चिन्मूर्त्ततां यातीत्यर्थः, एतदेवाह–अन्योऽन्यव्याप्तिजा चेयं–संवित्तिः, आत्मधर्मत्वात्, तस्य च स्पर्शोपयोगादिति, एवं च यादि सङ्गतं कर्मप्रकृत्यात्मनोः, कथञ्चिदितरेतररूपापत्तेरिति ॥ २३५ ॥ एतदेव समर्थयन्नाह–'मूर्त्तये'त्यादि, मूर्त्तयाऽपि कर्मप्रकृत्या 'आत्मन' जीवस्य 'योग' सम्बन्धो न्याय्य एव, निदर्शनमाह–घटेन सह नभसो यथा, योग इति, दोषान्तरपरिहारायाह–'उपघातादिभावश्च' उपघातानुग्रहभावश्च मूर्त्तया अपि कर्मप्रकृतेः सकाशादात्मनो युक्त एव, अत्रापि निदर्शनं–ज्ञानस्येव सुरादिना, सुरयोपघातः ब्राह्म्यादिनाऽनुग्रह इति लोकसिद्धम् ॥ २३६ ॥ उपसंहरन्नाह —'एव'मित्यादि, 'एवम्' उक्तेन प्रकारेण प्रकृतिवादोऽपि विज्ञेयः 'सत्य एव हि' नानृत इति, उपपत्त्यन्तरमाह–'कपिलोक्तत्वतः' (तथापि युक्त) इत्याह–दिव्यो हि स महामुनिः, नानृतवादी, ततश्च तस्याप्ययमभिप्राय इति गर्भः ॥ २३७ ॥ पार्वान्तरमभिधित्सयाऽऽह–

मन्यन्तेऽन्ये जगत्सर्वं, क्लेशकर्मनिबन्धनम् । क्षणक्षयि महाप्राज्ञा, ज्ञानमात्रं तथाऽपरे ॥ २३८ ॥
त आहुः क्षणिकं सर्वं, नाशहेतोरयोगतः । अर्थक्रियाऽसमर्थत्वात्परिणामात् क्षयेक्षणात् ॥ २३९ ॥
ज्ञानमात्रं च यल्लोके, ज्ञानमेवानुभूयते । नार्थस्तद्व्यतिरेकेण, ततोऽसौ नैव विद्यते ॥ २४० ॥

'मन्यन्ते' इत्यादि, मन्यन्ते 'अन्ये' सौत्रान्तिकाः सौगताः 'जगत्सर्वं' चराचरं 'क्लेशकर्मनिबन्धनं' रागादिकर्मनिमित्तं, तथा 'क्षणक्षयि' प्रतिक्षणनश्वरं, महाप्राज्ञाः–तेभ्योऽपि सूक्ष्मबुद्धयः ज्ञानमात्रं तथा 'अपरे' योगाचाराः सौगता एव मन्यन्ते ॥ २३८ ॥ सौत्रान्तिकमतमुपन्यस्यन्नाह—'त आहु'रित्यादि, 'ते' सौत्रान्तिका आहुः–यदुत क्षणिकं सर्वं, कुतः? इत्याह–नाशहेतोरयोगतः, अयोगश्च नश्वरेतरविकल्पद्वारेण ज्ञेयः, तथा (अर्थ) क्रियाऽसमर्थत्वात्, नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्, तथा 'परिणामात्' प्रतिक्षणमतादवस्थ्यात्, 'क्षयेक्षणात्' अन्ते क्षयदर्शनादिति ॥ २३९ ॥ योगाचारमताभिधित्सयाऽऽह—'ज्ञान'मित्यादि, ज्ञानमात्रं च सर्वं, कथं?–'यद्' यस्माल्लोके ज्ञानमेव 'अनुभूयते' चेतनत्वेन संवेद्यते, नार्थस्तद्व्यतिरेकेणानुभूयते, जडत्वाभ्युपगमात्, यत एवं ततोऽसौ नैव विद्यतेऽर्थः, अननुभूयमानत्वादिति ॥ २४० ॥ वार्त्तान्तरमाह—

अत्राप्यभिदधत्यन्ये, स्मरणादेरसम्भवात् । बाह्यार्थवेदनाच्चैव, सर्वमेतदपार्थकम् ॥ २४१ ॥
अनुभूतार्थविषयं स्मरणं लौकिकं यतः । कालान्तरे तथाऽनित्ये, मुख्यमेतन्न युज्यते ॥ २४२ ॥

सोऽन्तेवासी गुरुः सोऽय, प्रत्यभिज्ञाऽप्यसङ्गता । दृष्टकौतुकमुद्वेग, प्रवृत्ति प्राविरेव च ॥ २४३ ॥
सकृतस्योपभोगस्तु, दूरोत्सारित एव हि । शीलानुष्ठानहेतुर्यः, स नश्यति तदैव यत् ॥ २४४ ॥
सन्तानापेक्षयाऽस्माक, व्यवहारोऽखिलो मत । स चैक एव तस्मिंश्च, सति कस्मान्न युज्यते? ॥ २४५ ॥
यस्मिन्नेव तु सन्ताने, आहिता कर्मवासना । फल तत्रैव सधत्ते, कर्पासे रक्तता यथा ॥ २४६ ॥
एतदप्युक्तिमात्र यन्न हेतुफलभावत । सन्तानोऽन्य स चायुक्त, एवासत्कार्यवादिन ॥ २४७ ॥

'अत्रापी'त्यादि, 'अत्रापि' अनन्तरोदितमतद्वये अभिदधति 'अन्ये' जैनाद्यः-'स्मरणादेः' स्मरणप्रत्यभिज्ञानादे-रसम्भवात्स्मरणात् यथार्थवेदनाद्येव-तद्ग्रहणपरिणामवता विज्ञानेन सर्वमेतत्-क्षणिकत्वादिसाधनं परोक्तम् 'यथा' निरर्थकमित्यर्थः ॥ २४१ ॥ स्मरणासम्भवमाह-'अनुभूते'त्यादिना—'अनुभूतार्थविषयम्' अनुभूतार्थगोचर स्मरण 'लौकिक' आगोपालादिसिद्ध 'यत' यस्मात् कालान्तरे आगामिनि, तथा 'अनित्ये' निरन्वयनश्वरेऽनुभवितरि 'मुक्त' निरुपचरितम् 'एतत्' स्मरण 'न युज्यते' न घटत इति ॥ २४२ ॥ प्रत्यभिज्ञाऽपि न युज्यत इत्याह—'सोऽन्तेवासी'त्यादि, 'सोऽन्तेवासी' सोऽयं शिष्यः, गुरुः सोऽयम्, प्रत्यभिज्ञाप्येवं या सा असङ्गता, तथा 'दृष्टकौतुकं' लोकविस्मृ, तद्वेगसद्भावो, प्रवृत्तिप्रभृतिर्भावित्वेव आगिष्टस्यासङ्गतेति ॥ २४३ ॥ तथा—'सकृतस्ये'त्यादि, 'सकृ

तस्य' आत्मोपात्तस्य शुभादेः 'उपभोगस्तु' अनुभवस्तु दूरोत्सारित एव हि, सुतरां न युज्यत इत्यर्थः, किमित्याह— 'सन्तानेत्यादिना, 'सन्ताशीलानुष्ठानहेतुर्यः क्षणः स नश्यति निरन्वयस्तदैव 'यत्' यस्मात् ॥२४४॥ पराभिप्रायमाह—'सन्ताने'त्यादिना, 'सन्तानापेक्षया' भूतभवद्भविष्यत्क्षणप्रवाहापेक्षया 'अस्माकं' सौगतानां व्यवहारोऽखिलो मतः, ऐहिक आमुष्मिकश्च, सच सन्तान एक एव, न नाना, तस्मिंश्चैवंभूते सति कस्मान्न युज्यते स्मृत्यादि?, युज्यत एवेत्यभिप्रायः ॥ २४५ ॥ आमुष्मिकमधिकृत्याह—'यस्मि'न्नित्यादि, यस्मिन्नेव तु सन्ताने—उक्तलक्षणे आहिता कर्मवासना—शुभाशुभा फलं 'तत्रैव' सन्ताने, नान्यस्मिन्, युज्यते, कर्पासे रक्तता यथा, लाक्षारसजेति ॥ २४६ ॥ अत्रोत्तरम्—'एतदपी'त्यादि, एतदप्युक्तिमात्रं 'यत्' यस्मात् न हेतुफलभावतः सकाशात् सन्तानोऽन्यः, किन्तु हेतुफलभावः, स चायुक्त एव, हेतुफलभावः कस्य? इत्याह—(अ) सत्कार्यवादिन इति ॥ २४७ ॥ एतदेव प्रकटयन्नाह—

भावो नाभावमेतीह, तदुत्पत्त्यादिदोषतः ॥ २४८ ॥

नाभावो भावतां याति, शशशृङ्गे तथाऽगतेः । सदा नाशे न तत्स्थितिः ॥ २४९ ॥

सतोऽसत्त्वे तदुत्पादस्ततो नाशोऽपि तस्य यत् । तन्नष्टस्य पुनर्भावः, तथा चोक्तानतिक्रमः ॥२५०॥

स क्षणस्थितिधर्म्मा चेत्, द्वितीयादिक्षणास्थितौ । युज्यते ह्येतदप्यस्य, सतोऽसत्त्वं व्यवस्थितम् ॥२५१॥

क्षणस्थितौ तदैवास्य, नास्थितिर्युक्त्यसङ्गतेः । न पश्चादपि सा नेति, भवनं सूरयो विदुः ॥ २५२ ॥

न तद्भवति चेत्, किं न सदाऽसत्त्वं?, तदेव यत् । न भवत्येतदेवास्य,

कादाचित्कमदो यस्माद्,उत्पादाथस्य तद् ध्रुवम्। तुच्छस्याप्तेस्यतुच्छस्याप्यतुच्छत्वात्कथ नु य(त)त्?२५३
तदा भूतेरिय तुल्या, तन्निवृत्तेर्न, तस्य किम्?।तुच्छतात्तेर्न भावोऽस्तु, नासत्सत्, सदसत् कथम्? २५४
स्वहेतोरेव तज्जात, तत्स्वभाव यतो ननु । तदनन्तरभावित्वादितरत्राप्यदः समम् ॥ २५५ ॥
नाहेतोरस्य भवन, न तुच्छे तत्स्वभावता। तत कथ नु तन्माव, इति युक्त्या कथ समम्? ॥२५६॥
स एव भावस्तद्धेतुस्तस्यैव हि तदाऽस्थिते । स्वनिवृत्तिस्वभावोऽस्य, भावस्यैव ततो न किम्?॥२५७॥
ज्ञेयत्ववत्स्वभावोऽपि, न चायुक्तोऽस्य तद्विध । तदभावे न तज्ज्ञान, तन्निवृत्तेर्गति कथम्?॥२५८॥
तत् तद्विधस्वभाव यत्, प्रत्यक्षेण तथैव हि । गृह्यते तद्गतिस्तेन, नैतत्कचिदनिश्चयात् ॥ २५९ ॥
समारोपादसौ नेति, गृहीत तत्त्वतस्तु तत् । यथा भावग्रहात्तस्यास्तिप्रसङ्गाददोऽप्यसत् ॥ २६० ॥
गृहीत सर्वमेतेन, तत्त्वतो निश्चय पुन । मितग्रहसमारोपादिति तत्त्वव्यवस्थितेः ॥ २६१ ॥
एकत्र निश्चयोऽन्यत्र, निरशानुभवादपि । न तथा पाटवाभावादित्यपूर्वमिद तमः ॥ २६२ ॥
स्वभावक्षणतो मूर्द्ध, तुच्छता तन्निवृत्तित । नासावेकक्षणग्राहिज्ञानात्सम्यग् विभाव्यते ॥ २६३ ॥

तस्यां च नागृहीतायां, तत्तथेति विनिश्चयः । नहीन्द्रियमतीतादिग्राहकं सद्भिरिष्यते ॥ २६४ ॥
अन्तेऽपि दर्शनं नास्य, कपालादिगतेः क्वचित् । न तदेव घटाभावो, भावत्वेन प्रतीतितः ॥ २६५ ॥
न तद्गतेर्गतिस्तस्य, प्रतिबन्धविवेकतः । तस्यैवाभवनत्वे तु, भावाविच्छेदतोऽन्वयः ॥ २६६ ॥
तस्मादवश्यमेष्टव्यं, तदूर्ध्वं तुच्छमेव तत् । ज्ञेयं संज्ञायते ह्येतदपरेणापि युक्तिमत् ॥ २६७ ॥
नोत्पत्त्यादेस्तयोरैक्यं, तुच्छेतरविशेषतः । निवृत्तिभेदतश्चैव, बुद्धिभेदाच्च भाव्यताम् ॥ २६८ ॥

'नाभाव' इत्यादि, अभावः तुच्छः भावतां याति, अतुच्छतां प्रतिपद्यत इत्यर्थः, कुतः? इत्याह–शशशृङ्गे अभावे 'तथाऽगतेः' भावत्वेनागतेः, तथा भावः अतुच्छः 'नाभावमेति' न तुच्छतां यातीह, कुतः? इत्याह–'तदुत्पत्त्यादि-दोषतः' अभावोत्पत्त्यादिदोषात् ॥ २४८ ॥ कथं दोषः? इत्याह—'सतोऽसत्त्वे' इत्यादि, 'सतः' भावस्य 'असत्त्वे' अभावे सति, किमित्याह–'तदुत्पादः' असत्त्वोत्पादः, कादाचित्कत्वात्, 'ततः' उत्पादात् नाशोऽपि 'तस्य' असत्त्वस्य, कृतकत्वात्, 'यत्' यस्मादेवं 'तत्' तस्मान्नष्टस्य ते सतः पुनर्भावः, तदसत्त्वनाशात्, सदा नाशे विवक्षिते सतः 'तत्स्थितिः' न विवक्षितसतः स्थितिः, सदा तन्नाशोपपत्तेरिति ॥ २४९ ॥ पराभिप्रायमाह–'स क्षणस्थिती'त्यादिना—'सः' नाशः क्षणस्थितिधर्मा चेत्, भाव एव तद्विशेषणात्, अत्राह–द्वितीयादिक्षणास्थितौ सत्यां युज्यते ह्येतदपि–क्षण-स्थितिधर्मकत्वमस्य, तथा च–एवं च सति 'उक्तानतिक्रमः' उक्तदोषापत्तिरेव ॥ २५० ॥ एतदेव भावयति—'क्षणे'-

त्यादि, क्षणस्थितौ सत्यां 'तदैव' तस्मिन्नेव काले 'अस्य' क्षणस्थितिधर्मणो वस्तुनो नास्थितिः, कुतः? इत्याह–युक्त्यसङ्गतेः, क्षणस्थितिविरोधात्, न 'पश्चादपि' क्षणादूर्ध्वं सा नेति, अस्थितिः, युक्त्यसङ्गतेरेवेति, एवं तस्यैवाभवनेन सतोऽसत्त्वं व्यवस्थितं, सतश्च सतोऽसत्त्व इत्यादेरनतिक्रम एव ॥ २५१ ॥ अत्रैवाक्षेपपरिहारावाह–'न त'दित्यादिना—न 'तत्' असत्त्वं भवति चेत्, तुच्छत्वादित्यभिप्रायः, अत्रोत्तरे–किं न सदा, सत्त्व, सत्त्वाभावात्, पर आह–'तदेव' सत्त्वमेव 'यत्' यस्मान्न भवति, निवर्तते अतो न सदा सत्त्वम्, अत्रोत्तरम्–'एतदेव' अभवनं स्वप्रवृत्तिलक्षणं 'अस्य' असत्त्वस्य 'भवन' सत्त्व 'सूरयो विदु' पण्डिता जानन्ति, तदात्वेनेति भावः ॥ २५२ ॥ एतदेव स्पष्टयन्नाह–'कादाचित्क'मित्यादिना—कादाचित्कमदः–एतदसत्त्वं, तत्सत्त्वकालासत्त्वे, यस्मात्कारणात् 'उत्पादादि' उत्पादविनाशादि 'अस्य' असत्त्वस्य 'तत्' तस्मात् ध्रुवनियोगो न। पराभिप्रायमाह–तुच्छस्याप्येवमसत्त्वस्योत्पादादि, अत्रोत्तरम्–अतुच्छस्यापि सत्त्वस्य अतुच्छत्वात्कारणात् कथं नु 'तत्' उत्पादादि? ॥ २५३ ॥ पर आह—'तदा भूते'रित्यादि, 'तदा भूते'रिति तस्मिन्नेव काले उत्पत्तेः अतुच्छस्योत्पादादि न्याय्यम्, अत्रोत्तरम्–'इयं तुल्या' इयं–तदा भूतिः तुच्छस्यापि तुल्या, सत्त्वक्षणानन्तर तदसत्त्वात्, पर आह–तन्निवृत्तेर्नेति, तन्निवृत्तेः–तस्यैवाभवनेनातुच्छस्य निवृत्तेर्न तुल्या निवृत्तिः?, अस्ति चेत्यभिप्रायः, पर आह–तुच्छतासेरिति, न तु तस्य निवृत्तिः, तुच्छताऽऽसेः, तुच्छेन हि तुच्छतामिव तदात्मकत्वात्र तन्निवृत्तावपि तत्रान्यत्किञ्चित्, तन्निवृत्तेरपि तुच्छत्वादित्यर्थः, अत्रोत्तरं–न भावोऽस्त्विति, न चैतदेवं

यदुच्यते भवता–तुच्छतया तुच्छतासौ चेति न तन्निवृत्तिः, किन्तु 'भावोऽस्तु' (अ)तुच्छता भवतु, एवमेवैतन्निवृत्त्युपपत्तेरिति । पर आह—'नासत्सदि'ति, कथं चासत्सद्भवति येनोच्यते तुच्छतानिवृत्तौ भावोऽस्त्वित्यभिप्रायः, अत्रोत्तरं—सदसत्कथमिति, एतदुक्तं भवति–यद्यसत्सन्न भवति, प्रकृत्यन्यथात्वायोगेन, ततः सदसत्कथं भवतीति ॥ २५४ ॥ पर आह—'स्वहेतो'रित्यादि, 'स्वहेतोरेव' स्वकारणादेरेव 'तत्' सत्त्वं 'जातम्' उत्पन्नं 'तत्स्वभावम्' असद्भवनस्वभावं 'यतः' यस्मात् तस्मात्सदसद्भवतीति न दोषः, अत्रोत्तरं–ननु यद्येवं 'तदनन्तरभावित्वात्' सत्त्वानन्तरभावित्वाद् 'इतरत्रापि' असत्त्वे 'अदः' एतत् स्वहेतोरेव जातादिकल्पनं 'समं' तुल्यमेवेत्यर्थः ॥ २५५ ॥ पर आह—'नाहेतो'रित्यादि, 'नाहेतोः' नाकारणस्य 'अस्य' असत्त्वस्य भवनम्, असत्त्वे नापि तथा, न 'तुच्छे' निःस्वभावेऽस्मिन् ( तत् ) 'स्वभावता' सद्भावता, यत एवं ततः कथं नु 'तद्भावः' असतः सद्भावो ?, नैवेत्यर्थः, इत्येवं 'युक्त्या' न्यायेन कथं समं ?, स्वहेतोरेव जातादिकल्पनमिति ॥२५६॥ अत्रोत्तरमाह–'स एवे'त्यादिना–स एव भावो योऽसौ न भवति 'तद्धेतुः' असत्त्वहेतुः, कुतः ? इत्याह—'अ(त)स्यैव हि' भावस्य 'तदा' द्वितीयसमये 'अस्थितेः' अभवनाद्, एतेनासत्त्वस्य तदनन्तरभावित्वं नियमवदाह, एतच्च न तत्त्वतो हेतुफलभावाङ्गमिति, तथा स्वनिवृत्तिः–स्वात्मा(त्म)निवृत्तिः स्वभावो–धर्मोऽस्य –सत्त्वस्य, भावस्यैव हेतुसामर्थ्यात्, यत एवं ततो न किं युक्त्या समं स्वहेतोरेव जातादिकल्पनं ?, सममेव, न्यायस्य तुल्यत्वादभ्युपगमविचाराधिकाराच्च ॥ २५७ ॥ अत्रैवोपचयमाह—'ज्ञेयत्वव'दित्यादिना—ज्ञेयत्ववत् यथा ज्ञेयत्वं तद्वत्स्वभावोऽपि न चायुक्तः, किन्तु युक्त एव, 'अस्य' असत्त्वस्य 'तद्विधः' सद्भावनप्रकारः, यथा ज्ञेयत्वमपि न तत्रेत्याह—

'तदभावे' ज्ञेयत्वाभावे न 'तज्ज्ञानम्' असत्त्वज्ञानं, ततः किमित्याह—'तन्निवृत्तेः' सत्त्वनिवृत्तेः 'गति कथ' परिच्छेदः कथमिति ॥ २५८ ॥ परामिप्रायमाशङ्क्य परिहरति—'तत्तद्विध' इत्यादिना—तत्–सत्त्व, तद् वस्तु, 'तद्विधस्य भाव' निवृत्तिरूपधर्मक 'यत्' यस्मात् तस्मात् 'प्रत्यक्षेण' वस्त्वध्यासेना (सेन) 'तथैव हि' स्वधर्मवदेव 'गृह्यते' परिच्छिद्यते, यत एवं 'तद्गति' सत्त्वनिवृत्तिगतिः तेन कारणेनात्र परिहारे नैतद् यदुक्तं परेण, कुतः ? इत्याह–'क्वचि दनिश्चयात्' प्रतीत्यभावेन सर्वथानिश्चयात्, यद्वा क्वचित्सभागसम्भवसाधननिश्चयादिति ॥ २५९ ॥ परामिप्रायमाह— 'समारोपा'दित्यादिना—'समारोपात्' वस्तुत्यसत्त्वाध्यारोपेण 'असौ' निश्चयो नेति, 'गृहीत' परिच्छिन्न तत्त्वतस्तु तदसत्त्वं, कुतः ? इत्याह–यथाभावप्रहात् 'तस्य' प्रत्यक्षस्य, यथाभावमेवैत(वस्तु) तद्गृह्णाति, तद्बलोत्पत्तेः, अत्र परिहारः —प्रतिप्रसङ्गात्कारणात् 'अदोऽपि असद्' एतदपि यत्किञ्चित् ॥ २६० ॥ कुतः ? इत्याह—'गृहीत'मित्यादि, गृहीतं सर्वं त्रैलोक्यम् 'एतेन' विपश्चितज्ञानेन, 'तत्त्वतः' परमार्थतः तत्प्रतीत्योत्पत्तेः, अत्र परिहारः–निश्चयः पुनः सर्वविषयः 'मितग्रहसमारोपात्' मितग्रहणाध्यारोपेण 'इति' एवं तत्त्वव्यवस्थितेः कारणाददोऽप्यसदिति योगः ॥ २६१ ॥ अत्रै वोपचयमाह–'एकत्रे'त्यादिना—एकत्र निश्चयः सत्त्वे, अन्यत्र–असत्त्वे निरंशानुभवादपि–अविशिष्टात्मनिमित्तात् तथा- सत्त्वनिश्चयः पाटवाभावाद्–अधिकृतानुभवमान्द्यादित्येयमपूर्वमिदं तमः, निरंशस्य पाटवापाटवायोगात् ॥ २६२ ॥ अस्तु तमेव समर्पयति–'स्वभाव' इत्यादिना—'स्वभावक्षणात्' स्वसत्त्वक्षणात् 'ऊर्ध्वं' द्वितीयक्षणे 'तुच्छता' तदसत्त्वरूपा, कुतः ? इत्याह—'तन्निवृत्तित' तस्य निवृत्तेः, यत एवमतो न 'असौ' तुच्छता एकक्षया(णभा)विज्ञानात्, सम्भावप्रमा-

हिज्ञानादित्यर्थः 'सम्यग्विभाव्यते' न्यायतो निश्चीयते, तदालम्बनत्वात्तस्य ॥ २६३ ॥ यदि नामैवं ततः किमित्याह— 'तस्यां चे'त्यादि, 'तस्यां च' तुच्छतायां नागृहीतायां सत्यां 'तत्' वस्तु 'तथेति' क्षणस्थितिधर्मकमिति विनिश्चयो भवति, कुतः? इत्याह–नहि 'इन्द्रियं' चक्षुरादि 'अतीतादिग्राहकं' अतीतैष्यत्परिच्छेदकं सद्भिरिष्यते, वर्त्तमानार्थग्राहित्वात् प्रकृतेरपोहेन ॥२६४॥ प्रस्तुतोपचयमाह–'अन्तेऽपी'त्यादिना—'अन्तेऽपी'ति विसभागसन्तत्युत्पत्तावपि दर्शनं नास्य–घटाद्यसत्त्वस्य क्वचिदिति योगः, कुतः? इत्याह—'कपालादिगतेः' कपालादिपरिच्छेदात्कारणात्, स्यात्कपालाद्येव घटाभावः? इत्यत्राह–न 'तदेव' कपालादि 'घटाभावो' घटादिनाशः घटाद्यसत्त्वमितियावत्, कस्मात्? इत्याह —'भावत्वेन प्रतीतितः' सत्त्वेनानुभवात् ॥ २६५ ॥ तत एव तद्गतिरित्येतदपि नेत्याह–'न तद्गते'रित्यादिना—न 'तद्गतेः' कपालादिपरिच्छेदाद्गतिः 'तस्य' घटाद्यभावस्य, कुतः? इत्याह—'प्रतिबन्धविवेकतः' घटाद्यभावस्य कपालादेश्च प्रतिबन्धविरहात्, पक्षान्तराङ्गीकरणे दोषमाह—'तस्यैव' कपालादेः 'अभवनत्वे तु' घटाद्यभवनत्वे त्वभ्युपगम्यमाने भावाविच्छेदस्यैवान्वयत्वादिति ॥ २६६ ॥ उपसंहरन्नाह—'तस्मा'दित्यादि, यस्मादेवं तस्मादवश्यम् 'एष्टव्यम्' अङ्गीकर्त्तव्यं 'तदूर्द्ध्वं' क्षणस्थितिधर्मणः सत्त्वादूर्द्ध्वं 'तुच्छमेव तत्' असत्त्वमेव व्यवस्थितं ज्ञेयं, सद्विषयतया ज्ञायते चैतद् –असत्त्वं 'अपरेणापि' ज्ञानान्तरेण, 'युक्तिमत्' न्याय्यं तावद् एतत्, सत्त्वपरेणैव सर्वथा तद्वेदिना ज्ञायत इत्यभिप्रायः ॥ २६७ ॥ एवमसत्त्वस्योत्पत्त्याद्यभिधायानिष्टापत्तिपरिजिहीर्षयाऽऽह—'नोत्पत्त्यादे' रित्यादि, नोत्पत्त्यादेः कारणात् 'तयोः' सत्त्वासत्त्वयोः 'ऐक्यं' तुल्यत्वं, कुतः? इत्याह—'तुच्छेतरविशेषतः' तुच्छेतरत्वभेदात् निवृत्तिभेदत-

क्षेप, सत्त्वस्य निवृत्तिः तुच्छाऽसत्त्वस्य त्वतुच्छेति वृत्तिभेदः, इत्यन्तरमाह—बुद्धिभेदाच्च, तया हि सत्त्वे सत्त्वबुद्धिर सत्त्वे चासत्त्वबुद्धिरिति बुद्धिभेदः, अस्माच्च भाव्यतां न तयोरैक्यमिति ॥ २६८ ॥ एवं परपक्षप्रसङ्गमभिधाय यदनेनापा कृतं तदुपन्यस्यन्नाह—

एतेनैतत्प्रतिक्षिप्त, यदुक्त न्यायमानिना । न तत्र किञ्चिद्भवति, न भवत्येव केवलम् ॥ २६९ ॥
भावे ह्येष विकल्पः स्याद्विधेर्वस्त्वनुरोधत । न भावो भवतीत्युक्तमभावो भवतीत्यपि ॥ २७० ॥

'एतेने'त्यादि, 'एतेन' अनन्तरोदितेन प्रसङ्गदोषेण एत् प्रतिक्षिप्तं—व्युदस्तं यदुक्तं 'न्यायमानिना' धर्मकीर्त्तिना, यदुक्त तदाह—न 'तत्र' वस्तुनि क्षणादूर्ध्वं किञ्चिद्भवति वस्तुधर्मत्वधात्वं, किन्तु न भवत्येव केवलं—तदेव न भवति, अन्यथा तद्भावायोगात् ॥ २६९ ॥ न चाभावभवने तत्त्वान्यत्वकल्पनं युक्तमित्याह—'भावे ह्येष विकल्प' स्यात्,' 'भावे' वस्तुनो भवन एव 'एष विकल्प' स्यात्' तत्त्वान्यत्वविकल्पः, किं कारणं?—'विधेर्व(र्वि ध)स्त्वनुरोधतः' विधे-र्वस्तुनो विधाने 'वस्त्वनुरोधतः' वस्त्वनुरोधात्, अवस्तुनि सर्वथाऽप्रवृत्तिः, यदि निःस्वभावस्य नास्ति व्यापारसमावेशः कथमिदानीं भवत्यमानः सदाविषाणमित्यादिव्यवहारः?, अत्रोत्तरं—न भावो भवतीत्युक्तं, भावप्रतिषेधमात्रमेवाभावो भवति इत्यपि, न तु तुच्छस्य भवनं नाम, न तस्याभावो भवतीति, किमुक्तं भवति?—भावो न भवति ॥ २७० ॥ पर एव प्रसङ्गदोषं परिहरन्नाह—

सत्ताऽनास्ति(शि)त्वदोषस्य, प्रत्याख्यातं प्रसञ्जनम् ॥२७१॥
एतेनाहेतुकत्वेऽपि, ह्यभूत्वा नाशभावतः। सत्तानाशित्वदोषस्य, भावासेर्नाशितोदिता ॥२७२॥
प्रतिक्षिप्तं च यत्सत्तानाशित्वागोऽनिवारितम्। तुच्छरूपा स(त)दाऽसत्ता, भावासेर्नाशितोदिता ॥२७२॥
तत्तथाधर्म्मके ह्युक्तविकल्पो न विरुध्यते ॥ २७३ ॥
भावस्याभवनं यत्तद्भावभवनं तु यत्। तत्तथाधर्म्मके ह्युक्तविकल्पो न विरुध्यते ॥ २७३ ॥
तदेव न भवत्येतद्विरुद्धमिव लक्ष्यते। तदेव वस्तुसंस्पर्शाद्भवनप्रतिषेधतः ॥ २७४ ॥
सतोऽसत्त्वं यतश्चैवं, सर्वथा नोपपद्यते। भावो नाभावमेतीह, ततश्चैतद्व्यवस्थितम् ॥ २७५ ॥

'एतेने'त्यादि, 'एतेन' नाशस्य निःस्वभावत्वप्रतिपादनेन अहेतुकत्वेऽपि नाशस्याङ्गीक्रियमाणे अभूत्वा नाशभावतः,
नाशो हि प्रथममभूत्वा द्वितीयक्षणे भवतीत्यभूत्वा तद्भावः ततश्च 'सत्ताऽनाशित्वदोषस्य' इत्यङ्कुरादिवत्सत्त्वानाशित्व-
मितरोन्मज्जनमिति दोषस्य यत्प्रसञ्जनं तत्प्रत्याख्यातं, निराकृतमित्यर्थः, एतद्धर्म्मकीर्त्तिनोक्तम्, एतच्च प्रकरणकारेण
'सत्त्वा(तोऽ)सत्त्व' इत्यादिना प्रतिक्षिप्तम् ॥ २७१ ॥ एतेनैतत्प्रतिक्षिप्तमिति मनाण्या (समायो) जयन्नाह—'प्रति-
क्षिप्तं चे'त्यादि, प्रतिक्षिप्तं चैतत् 'यत्' यस्मात् 'सत्तानाशित्वागो' भावोन्मज्जनापराधः 'अनिवारितम्' तदवस्थ एव,
कथमित्याह—यस्मात् 'तुच्छरूपा' निःस्वभावात्मिका 'तदा' द्वितीयक्षणे 'असत्ता' नाशात्मना नाशस्य, तया तन्निवृत्त्या
भावासेः कारणान्नाशितोदिता प्रागेव तस्याः इति ॥ २७२ ॥ तथा—'भावस्ये'त्यादि, भावस्याभवनं यत्तुच्छमेव 'तत्'
तदेवाभावभवनमार्थीप्रतीतिमाश्रित्य 'यत्' यस्मात्तथाधर्म्मक एव—ज्ञेयत्वादिस्वभावे तस्मिन्नभवने 'उक्तविकल्पः'

तत्त्वान्यत्वलक्षणो न विरुध्यते, भावबन्ध्यायमाद्येरिति ॥ २७३ ॥ दोषान्तरमाह–'तदेवे'त्यादिना—तदेव न भवति एतत् परोदितं वस्तुतत्त्वापेक्षया विरुद्धमिव लक्ष्यते, कथमित्याह–तदेव वस्तुसंस्पर्शात्, वस्तुनश्च भवनरूपत्वात्, भूयो भवनप्रतिषेधतः–भवनं न भवतीत्यापत्तेरिति ॥ २७४ ॥ मूलमुपसंहरन्नाह–'सत' इत्यादिना—सतोऽसत्त्वं यतश्चैवम्–उक्तेन प्रकारेण सर्वथा नोपपद्यते, भावोन्मज्जनप्रसङ्गेन, भावो नाभावमेतीह यत्(र्क)प्राक् ततश्चैतत् 'व्यवस्थित' प्रति स्थितमेव ॥ २७५ ॥ साम्प्रतं 'नाभावो भावतां याती'त्येतद्व्यवस्थापयन्नाह—

असत सत्त्वयोगे तु, तत्तथाशक्तियोगत । नासत्त्व, तदभावे तु न तस्सत्त्व तदन्यवत् ॥ २७६ ॥
असदुत्पद्यते तद्धि, विद्यते यस्य कारणम् । विशिष्टशक्तिमत्तच्च, ततस्तत्सत्त्वसंस्थिति ॥ २७७ ॥
अत्यन्तासति सर्वस्मिन्, कारणस्य न युक्तितः । विशिष्टशक्तिमत्त्व हि, कल्प्यमान विराजते ॥२७८॥
तत्सत्त्वसाधक तच्च, तदेव हि तथा न यत् । अत एवेदमिच्छन्तु, न चैतस्येत्ययोगत ॥ २७९ ॥
वस्तुस्थित्या तथा तच्चत्तदनन्तरभावि तत् । नान्यच्चतश्च नाम्नेह, न तथाऽस्ति प्रयोजनम् ॥ २८० ॥
नाम्ना विनाऽपि तत्त्वेन, विशिष्टावधिना विना । चिन्त्यतां यदि सन्न्यायाद्वस्तुस्थित्याऽपि तत्तया ॥२८१॥
साधकत्वे तु सर्वस्य, ततो भाव प्रसज्यते । कारणाश्रयणेऽप्येवं, न तस्सत्त्व तदन्यवत् ॥ २८२ ॥

किं च तत्कारणं कार्यभूतिकाले न विद्यते । ततो न जनकं तस्य, तदा सत्त्वात्परं यथा ॥ २८३ ॥

'असत' इत्यादि, 'असतः' तुच्छस्य सत्त्वयोगेऽभ्युपगम्यमाने 'तत्तथाशक्तियोगतः' तस्य–असतः तथा–तत्सत्त्वभवनप्रकारेण शक्तियोगात् कारणात् नासत्त्वम्, असतः शक्त्ययोगात्, 'तदभावे तु' तथाशक्ति(अ)भावे पुनरसत् न तद्–विवक्षितं सत्त्वं, तदन्यवत् योग्यताभावाविशेषात् ॥ २७६ ॥ पराभिप्रायं चेतस्यारोप्याह—'अस'दित्यादि, असदुत्पद्यते 'तद्धि' तदेव वस्तु विद्यते यस्य-कारणं, न पुनरन्यत्, विशिष्टशक्तिमत्–विवक्षितजननस्वभावं तच्च कारणं, ततः कारणात् 'तत्सत्त्वसंस्थितिः' विशिष्टसत्त्वभावना सत इति ॥ २७७ ॥ अत्रोत्तरम्—'अत्यन्तासती'त्यादि, 'अत्यन्तासति' सर्वथाऽविद्यमाने सर्वस्मिन् कार्यजाते कारणस्य विवक्षिते न 'युक्तितः' न्यायेन 'विशिष्टशक्तिमत्त्वं हि' विवक्षितजननस्वभावत्वमेव कल्प्यमानं विराजते, सर्वथाऽवध्यभावात् ॥ २७८ ॥ एतदेव प्रकटयति—'तत्सत्त्वे'त्यादिना—'तत्सत्त्वसाधकं' विवक्षितकार्यसत्त्वसाधकत्वं, तत्कारणस्य विशिष्टस्य शक्तिमत्त्वमिति पराभिप्रायः, अत्रोत्तरं–'न' नैतदेवं, 'तदेव' विवक्षितकार्यसत्त्वं 'तदा' कारणकाले न 'यत्' यस्मादिति, पर आह–अत एवेदमिच्छन्तु, यत एव तत्सत्त्वसाधकं तत्, (अ)सतः साधकत्वानुपपत्तेः, अत्रोत्तरं–न चैतस्येत्ययोगतः, नैवैतदेवं, सर्वथाऽसति तस्मिन् स्वसत्त्वसाधकं तदित्यत्र तस्येत्ययोगात् ॥ २७९ ॥ पराभिप्रायमाह–'वस्तुस्थित्ये'त्यादिना—'वस्तुस्थित्या' आर्थं न्यायमाश्रित्य 'तथा तत्' तत्कार्यसत्त्वसाधकं तत्–कारणं, कुतः? इत्याह–'यत्' यस्मात् 'तदनन्तरभावि'विवक्षितकारणानन्तरभावि 'तत्' विशिष्टमेव कार्यं सत्त्वं, 'नान्यत्' सत्त्वान्तरं, यत एवं ततश्च नाम्नेह–अभिधानेनात्र–विचारे 'तथे'ति विवक्षितजननस्व-

भावमित्येवंभूते न—नास्ति प्रयोजनम्, अतदाभत्स्वाद्वस्तुसिद्धेरिति ॥ २८० ॥ अत्रोत्तरम्—'नाम्ना विनाऽपि' अभिधानमन्तरेणापि तत्त्वेन—भाव्येव प्रतिपत्त्या 'विशिष्टावधिना विना' भाविनं विशिष्टमवधिमन्तरेण विस्पष्टां, भाव्यस्यमयलम्ब्य, यदि 'सन्न्यायात्' सूक्ष्मन्यायेन वस्तुस्थित्याऽपि तल्लक्षणया 'तत्' कारण 'तथा' तत्कार्यसत्त्वसाधकं, नैव तदा सर्वथाऽसदित्यसत्साधक, तदेवं सर्वासतामविशिष्टमिति निरवधिकसाधकत्वमस्येत्यभिप्रायः ॥ २८१ ॥ अत्र बाधं दोष इत्याह—'साधके'त्यादि, साधकत्वे तु तस्याभ्युपगम्यमाने निरवधिक एव, किमित्याह—'सर्वस्य' कार्यजातस्य 'तत' कारणात् भावः प्रसज्यते, तस्यासत्साधकत्वेनाविशेषात्, उपसंहरमाह—'कारणाश्रयणेऽपि' कारणाङ्गीकरणेऽपि 'एवम्' उक्तेन न्यायेन 'तत्' विवक्षितं सत्त्वं तदन्यवत् योग्यताभावाविशेषात् ॥२८२॥ दोषान्तरमाह—'किञ्चे'त्यादिना—किञ्च—तत्कारणं पराभिप्रेत 'कार्यभूतिकाले' कार्यभवनकाले न विद्यते, क्षणिकत्वात्, यत एवं ततो न जनकं 'तत्' कार्यस्य, कुतः? इत्याह—'तदाऽसत्त्वात्' कार्यभवनकालेऽसत्त्वात्, पर यथा कारणवदित्यर्थः ॥ २८३ ॥ आशङ्काशेषं परिहरति—'अनन्तर चे'त्यादिना—

अनन्तर च तद्भावस्तत्त्वादेव निरर्थक । सम च हेतुफलयोर्नाशोत्पादावसङ्गतौ ॥ २८४ ॥
स्तस्तौ भिन्नावभिन्नौ वा, ताभ्यां? भेदे तयोः कुत ?। नाशोत्पादाभेदे तु, तयोर्मे तुल्यकालता२८५
न हेतुफलभावश्च, तस्या सत्त्वां हि युज्यते । तन्निबन्धनभावस्य, द्वयोरपि वियोगतः ॥ २८६ ॥

कल्पितश्चेदयं धर्मधर्मिभावो हि भावतः । न हेतुफलभावः स्यात्, सर्वथा तद्भावतः ॥ २८७ ॥
न धर्मः कल्पितो धर्म्मधर्मिभावस्तु कल्पितः । पूर्वो हेतुर्निरंशः स, उत्तरः फलमुच्यते ॥ २८८ ॥
पूर्वस्यैव तथाभावाभावे हन्तोत्तरं कुतः ? । तस्यैव तु तथाभावेऽसतः सत्त्वमदो न सत् ॥ २८९ ॥
तं प्रतीत्य तदुत्पाद, इति तुच्छमिदं वचः । अतिप्रसङ्गतश्चैव, तथा चाह महामतिः ॥ २९० ॥

अनन्तरं च तद्भावः, कारणानन्तरं कार्यभाव इति गर्भः, 'तत्त्वादेव' अनन्तरत्वादेव 'निरर्थकः' अप्रयोजनः, 'समं च हेतुफलयोः' एककालं च कार्यकारणयोर्नाशोत्पादौ 'असङ्गतौ' अघटमानौ ॥ २८४ ॥ एतदेवाभिधित्सुराह— 'स्तस्ता'वित्यादि, 'स्तः' स्यातां 'तौ' नाशोत्पादौ भिन्नावभिन्नौ वा ताभ्यां–कार्यकारणाभ्यां ?, भेदेऽभ्युपगम्यमाने 'तयोः' कार्यकारणयोः यथायोगं कुतो नाशोत्पादौ ?, नैवेत्यर्थः, 'अभेदे तु' अभेदे पुनरभ्युपगम्यमाने 'तयोरेव(वै)' कार्यकारणयोस्तुल्यकालता, तदभिन्ननाशोत्पादाभिन्नकालत्वादिति ॥ २८५ ॥ यदि नामैवं ततः किमित्याह—'न हेतुफले'त्यादि, न हेतुफलभावश्च 'तस्यां' तुल्यकालतायां सत्यां हि युज्यते, सव्येतरगोविषाणवत्, 'तन्निबन्धनभावस्य' कार्यकारणभावनिबन्धनत्वस्य–तद्भावभावित्वादेः 'द्वयोरपि' तयोरभिन्नकालयोर्वस्तुनोः 'वियोगतः' अभावात् ॥२८६॥ पराभिप्रायमाशङ्क्य परिहरन्नाह—'कल्पितश्चे'त्यादि, कल्पितश्चेत् अयम्–अपारमार्थिको धर्मधर्मिभावो, यदुत कारणविनाश इत्यादि 'भावतः' परमार्थतः, तत्रोत्तरं–न 'हेतुफलभावः' कार्यकारणभाव एव भवेत्, सर्वथा 'तद्भावतः'

कार्यकारणभावाभावात्, अभावस्य कल्पितत्वादिति ॥ २८७ ॥ पराभिप्रायमाह—'न धर्मे'त्यादिना—न धर्मः कल्पितः, कारणादि, धर्मधर्मिभावस्तु कारणं विनाऽयः कार्यमुत्पाद इति चेत्यादिः 'कल्पित' असारूपः, किमिति ?—यतः पूर्वो हेतुरुच्यते इति योगः, पूर्वो वस्तुक्षणो हेतुः, स च 'निरंश' एकस्वभावः, उत्तरः फलमुच्यते, निरंश एव, एवं हि पौर्वापर्यमात्रात् हेतुफलभावस्वमित्युक्तं भवति ॥ २८८ ॥ अत्रोत्तरमाह—'पूर्वस्ये'त्यादिना—पूर्वस्यैव भावक्षणस्य 'तथा भावाभावे' तथा—तेन फलरूपप्रकारेण भवनाभावे सति इत्योत्तर कुतः ?, यत्फलमुच्यते, नैव तदसत्सम्भवति, तस्यैव तु पूर्वभावक्षणस्य 'तथाभावे' तथा—तेन फलरूपप्रकारेण भवनेऽसतः सत्त्वम्, असत एव कार्यस्य सत्त्वम्, अतः—एतत् न 'सत्' शोभनमित्यर्थः, ॥ २८९ ॥ अनेन यत्सुदस्त तदाह—'न प्रतीत्ये'त्यादि, 'स प्रतीत्य' कारणक्षणमाश्रित्य 'समुत्पादः' कार्योत्पाद इति तुच्छमिदं वचः, अनन्तरोदितोपपत्तेः, हेत्वन्तरम्—अतिप्रसङ्गश्चैव, विश्वस्य तदनन्तर भावित्वात्, एतत्संवाद्येव पूर्वाचार्यमतमुपन्यस्यन्नाह—तथा चाह महामतिः (संमति) कारः स्वग्रन्थे ॥ २९० ॥ किं तत् ? इत्याह—

सर्वथैव तथाभाविवस्तुभावादृते न यत् । कारणानन्तरं कार्यं, प्राग्भवस्ततो न तत् ॥ २९१ ॥
तस्यैव तत्स्वभावत्वकल्पनाऽसपद्यप्यलम् । न युक्ता युक्तिवैकल्यराहुणा जन्मपीडनात् ॥ २९२ ॥
तदनन्तरभावित्वमात्रतस्तद्व्यवस्थितौ । विश्वस्य विश्वकार्यत्वं, स्यात्तन्मात्राविशेषतः ॥ २९३ ॥

अभिन्नदेशतादीनामसिद्धत्वाद् अनन्वयात्। सर्वेषामविशिष्टत्वान्न तन्नियमहेतुता ॥ २९४ ॥
योऽप्येकस्यान्यतो भावः, सन्ताने दृश्यतेऽन्यदा। तत एव विदेशस्थात्, सोऽपि यत्तन्न बाधकः ॥२९५॥

'सर्वथैवे'त्यादि, सर्वथैव तथाभाविवस्तुभावाद् ऋते न यत् कारणानन्तरं कार्यं, असतः सत्ताऽयोगात्, 'द्राग्' झटित्येव 'नभस्तः' आकाशात् 'ततः' तस्मान्न कार्यम्, एवंवादिनः कार्याभाव एवेत्यर्थः ॥ २९१ ॥ एतदेव स्पष्टयन्नाह —'तस्यैवे'त्यादि, तस्यैव कार्यस्य 'तत्स्वभावत्वकल्पनासम्पदपि' तदनन्तरभवनस्वभावत्वकल्पनर्द्धिरपि 'अलम्' अत्यर्थं न युक्ता, कस्मादित्याह–युक्तिवैकल्यराहुणा' युक्तिवैकल्यक्रूरग्रहेण 'जन्मपीडनात्' उक्तवत्तदुत्पत्त्ययोगात् ॥ २९२ ॥ अतिप्रसङ्गमाह–'तदनन्तरे'त्यादिना—'तदनन्तरभावित्वमात्रतः' कारणानन्तरभावित्वमात्रेण 'तद्व्यवस्थितौ' कार्यकारणभावसिद्धौ सत्यां विश्वस्य वस्तुनः 'विश्वकार्यत्वं' सर्वकार्यत्वं स्यात्, 'तद्भावाविशेषतः' तदनन्तरभावित्वमात्रभावाविशेषात् ॥ २९३ ॥ विशेषकारणं विक्षिपति–'अभिन्ने'त्यादिना—'अभिन्नदेशतादीनाम्' अभिन्नदेशाभिन्नजातितादीनामसिद्धत्वात्, असिद्धत्वं च क्षणिकत्वेन तद्भेदोपपत्तेः, परिणामिन्यपि समानमेतदित्याह–'अनन्वयात्' अनन्वयश्च तथाऽभ्युपगमेन, यत एवमतः सर्वेषां कार्याणामविशिष्टत्वात् सर्वकारणान्येव प्रति, 'न तन्नियमहेतुता' न विशिष्टकारणकार्यनियमहेतुतेत्यर्थः ॥२९४॥ पराभिप्रायमाशङ्क्य परिहरति–'योऽपी'त्यादिना—योऽपि क्वचित् 'एकस्य' धूमादेः 'अन्यतः' इतोऽग्न्यादेः 'भावः' उत्पादः सन्ताने दृश्यते 'अन्यदा' अन्यस्मिन् काले, न क्षणयोर्व्या-

व्यावहारिक ग्रहणमिति सन्तानग्रहण, तत एव—अनादेः 'विशेषास्यात्' देशान्तरस्थितत्वात् सोऽपि तत्तत्स्वभावतया 'यत्' यस्मात् 'तत्' तस्मात् न बाधकोऽनियतकल्पनाया इति ॥२९५॥ एतेन प्रसङ्गाभिधानेन पक्षुदस्तं तदभिधातुकाम आह—

एतेनैतत्प्रतिक्षिप्त, यदुक्त सूक्ष्मबुद्धिना । नासतो भावकर्तृत्व, तदवस्थान्तर न स ॥ २९६ ॥
वस्तुनोऽनन्तर सत्ता, कस्यचित्तथा नियोगत । सा तस्फल मता सैव, भावोत्पत्तिस्तदात्मिका ॥२९७॥
असदुत्पत्तिरप्यस्य, प्रागसत्त्वात्प्रकीर्तिता । नासत सत्त्वयोगेन, कारणात्कार्यभावतः ॥ २९८ ॥
प्रतिक्षिप्त च तद्धेतो, प्राप्नोति फलतां विना । असतो भावकर्तृत्व, तदवस्थान्तर च सः ॥ २९९ ॥
वस्तुनोऽनन्तर सत्ता, तत्तथा तां विना भवेत् । नभ पातादसत्सत्त्वयोगाद्वेति न तस्फलम् ॥ ३०० ॥
असदुत्पत्तिरप्येव, नास्यैष प्रागसत्त्वतः । किं त्वसत्सत्त्वमत्येवमिति सम्यग्विचार्यताम् ॥ ३०१ ॥
एतश्च नोक्तयुक्त्या, सर्वथा युज्यते यतः । नाभावो भावतां याति, व्यवस्थितमिद तत ॥ ३०२ ॥

'एतेने'त्यादि, 'एतेन' अनन्तरोदितप्रसङ्गेन 'एतत्' वक्ष्यमाण 'प्रतिक्षिप्त' अपाकृतं, यदुक्त 'सूक्ष्मबुद्धिना' शान्तरक्षितेन, यदुक्तं तदाह—'नासतः' तुच्छस्य 'भावकर्तृत्वं' वस्तुजनकत्वं, तथा 'तदवस्थान्तर' असदवस्थान्तरं न 'स' भाव इति ॥ २९६ ॥ किं तर्हि?, 'वस्तुनः' इत्यादि, 'वस्तुन' मृत्पिण्डादेरनन्तरं सत्ता 'कस्यचित्' घटादेर्या

'नियोगतः' नियोगेन सा 'तत्फलं' तस्यानन्तरस्य वस्तुनः कार्यं 'मता' दृष्टा, तस्याः कथमुत्पत्तिः ? इत्याह—'सैव' सत्ता
भावोत्पत्तिः, उत्पत्त्युत्पत्तिमतोरभेदात् 'तदात्मिका' भावात्मिकैव, नान्येति ॥ २९७ ॥ यद्येवं कथमसत उत्पत्तिः ? इत्याह
—'अस'दित्यादि, असदुत्पत्तिरपि 'अस्य' विवक्षितकार्यस्यैव प्रागसत्त्वात् प्रकीर्त्यते, इदमेव पूर्वं नेत्यसदित्युच्यते,
नासतः-तुच्छस्य 'सत्त्वयोगेन' सत्त्वव्यापारेणासदुच्यते, कुतः ? इत्याह—कारणात् सकाशात् 'कार्यभावतः' कार्यो-
त्पादाद्, भावाद्धि भावप्रसूतिरिति ॥ २९८ ॥ यथैव तत्प्रतिक्षिप्तं तथा लेशतो दर्शयति—'प्रतिक्षिप्तं चे'त्यादिना—
प्रतिक्षिप्तं चैतत् 'तद्धेतोः' विशिष्टफलहेतोर्मृदादेः 'फलतां विना' तथाभवनमन्तरेणेति योगः 'प्राप्नोती'त्यापद्यते,
किमित्याह—'असतः' तुच्छस्यैव भावकर्तृत्वं, कारणस्य तत्त्वतोऽकारणत्वात्, तथा 'तदवस्थान्तरं' सदवस्थान्तरं च
'सः' भावः प्राप्नोतीति योगः ॥२९९॥ एतदेव भावयति—'वस्तुनः' इत्यादिना—'वस्तुनः' मृदादेरनन्तरं 'सत्ता' घटादि-
कार्यरूपा तत्तथाता 'तां विना' मृदादेरेव तद्भावमन्तरेण भवेद् 'नभःपातात्' आकाशपातेन, 'असत्त्वयोगाद्वा'
असत्सद्भवनेन वा, प्रकारान्तराभावादिति, एवं नियमायोगेन 'न तत्फलं' न तस्यैव कार्यमिति ॥ ३०० ॥ उपन्यस्तशेषं
निराकरोति—'अस'दित्यादिना—असदुत्पत्तिरपि 'एवम्' उक्तेन प्रकारेण न अस्यैव प्रागसत्त्वतः विवक्षितकार्यस्य, किन्व-
सत्सद्भवति ?, न भवत्येव सदुत्पत्तिरिति सम्यग् विचार्यतां, सूक्ष्माभागेन ॥ ३०१ ॥ मूलोपसंहारमाह—'एतच्चे'त्यादिना
—'एतच्च' असत्सद्भवनमनन्तरापादितं नोक्तवद्युक्त्या सर्वथा भावावधिशून्यं युज्यते, यतस्तच्छक्त्यभावेनातिप्रसङ्गात्,
नाभावो भावतां याति यदुक्तं प्राग्व्यवस्थितमिदं 'ततः' तस्मात् न्यायोपपत्तेरिति ॥ ३०२ ॥ सामग्रीपक्षमधिकृत्याह—

याऽपि रूपादिसामग्री विशिष्टप्रत्ययोद्भवा । जनकत्वेन बुद्ध्यादेः, कल्प्यते साऽप्यनर्थिका ॥ ३०३ ॥
सर्वेषां बुद्धिजनने, यदि सामर्थ्यमिष्यते । रूपादीनां ततः कार्यभेदस्तेभ्यो न युज्यते ॥ ३०४ ॥
रूपालोकादिकं कार्यमनेकं चोपजायते । तेभ्यस्तावत्त्रय एवेति, तदेतच्चिन्त्यतां कथम्? ॥ ३०५ ॥
प्रभूतानां च नैकत्र, साध्वी सामर्थ्यकल्पना । तेषां प्रभूतभावेन, तदेकत्वविरोधतः ॥ ३०६ ॥
तानशेषान् प्रतीत्येह, भवदेकं कथं भवेत्? । एकस्वभावमेकं यत्, तत्तु नानेकभावतः ॥ ३०७ ॥
यतो भिन्नस्वभावत्वे, सति तेषामनेकता । तावत्सामर्थ्यजत्वे च, कुतस्तस्यैकरूपता? ॥ ३०८ ॥
यज्जायते प्रतीत्यैकसामर्थ्यं नान्यतो हि तत् । तयोरभिन्नतापत्तेर्भेदे भेदस्तयोरपि ॥ ३०९ ॥
न प्रतीत्यैकसामर्थ्यं, जायते तत्र किञ्चन । सर्वसामर्थ्यभूतिस्वभावत्वात्तस्य चेन्न तत् ॥ ३१० ॥

'यापी'त्यादि, याऽपि 'रूपादिसामग्री' रूपालोकमनस्कारचक्षुःसन्निधानरूपा 'विशिष्टप्रत्ययोद्भवा' स्वहेतुसन्निधिपरम्परोपजनितविशेषा जनकत्वेन 'बुद्ध्यादेः' कार्यजातस्योत्पत्त्यै कल्प्यते साऽपि 'अनर्थिका' अभीष्टार्थविकलेत्यर्थः ॥ ३०३ ॥ एतदेव दर्शयन्नाह—'सर्वेषा'मित्यादि, सर्वेषां बुद्धिजनने एकस्मिन्नेव यदि सामर्थ्यमिष्यते, तत्स्वभावतया रूपादीनां, ततः किमित्यत आह—कार्यभेदो न युज्यते, बुद्धिव्यतिरेकेण, को वा किमाह? इति ॥३०४॥ अत्राह—'रूपा

लोके'त्यादि, रूपालोकादिकं कार्यं स्वसन्तत्यपेक्षयाऽनेकं चोपजायते तेभ्यो–रूपादिभ्यस्तावद्भ्य एवेति तद्वैकल्यासम्भवात् 'तदेतत्' भिन्नकार्यभवनं चिन्त्यतां कथं तुल्यसामर्थ्येभ्य ? इति ॥ ३०५ ॥ दोषान्तराभिधित्सयाऽऽह—'प्रभूताना'मित्यादि, प्रभूतानां च रूपादीनां नैकत्र, बुद्ध्यादौ, 'साध्वी' न्याय्या 'सामर्थ्यकल्पना' शक्तिसमर्थना, कथमित्याह–'तेषां' समर्थानां प्रभूतभावेन कारणेन 'तदेकत्वविरोधतः' कार्यैकत्वविरोधात् ॥३०६॥ एतदेव भावयन्नाह—'ताने'-त्यादि, 'तान्' समर्थान् अशेषान् 'प्रतीत्य' आश्रित्य 'इह' लोके भवत्कार्यमेकं कथं भवेत्?, नैव, अत्रोपपत्तिः–एकस्वभावं सदेकं 'यत्' यस्मात् 'तत्' तु-पुनः नैकस्वभावम्, 'अनेकभावतः' अनेकेभ्य उत्पत्तेः ॥ ३०७ ॥ किमित्येतदेवमित्याह—'यत' इत्यादि, 'यतः' यस्मात् 'भिन्नस्वभावत्वे' नानास्वभावत्वे सति 'तेषां' रूपादीनामनेकता, ततः किमित्याह–'तावत्सामर्थ्यजत्वे च' एतावद्भ्यः समर्थेभ्यो जन्मनि च कुतः 'तस्य' कार्यस्य बुद्ध्यादेः 'एकरूपता' एकस्वभावता ? ॥ ३०८ ॥ एतदेव समर्थयन्नाह–'य'दित्यादिना—यज्जायते तत् कार्यं 'प्रतीत्य' आश्रित्य एकसामर्थ्यं कारणगतं, नान्यतो हि सामर्थ्यान्तरात् तत्तदेव जायते, कुतः? इत्याह–'तयोः' कारणसामर्थ्ययोः 'अभिन्नतापत्तेः' एकत्वप्रसङ्गात्, भेदे सति भेदस्तयोरपि–तत्कार्ययोः ॥ ३०९ ॥ पराभिप्रायमाशङ्क्य परिहरति–'न प्रतीत्ये'त्यादिना—न 'प्रतीत्य' आश्रित्य एकसामर्थ्यं जायते 'तत्र' कार्ये किञ्चन, कुतः ? इत्याह–सर्वेभ्यः समर्थेभ्यः भूतिस्वभावत्वात् 'तस्य' कार्यस्य, चेदित्याशङ्क्याह–'न तत्' नैतदेवम् ॥ ३१० ॥ अत्रैवोपपत्तिमाह—

प्रत्येकं तस्य तद्भावे, युक्ता ह्युक्तस्वभावता । न हि तत्सर्वसामर्थ्यं, तत्प्रत्येकत्ववर्जितम् ॥ ३११ ॥

'प्रत्येक'मित्यादि, 'प्रत्येकम्' एकमेकं प्रति 'तस्य' पुत्रादेः कार्यस्य 'तद्भावे' तेभ्यः समग्रेभ्य उत्पत्तौ 'युक्ता' न्याय्या हि 'एकस्वभावता' कर्मसामर्थ्यभूतिस्वभावता, किमित्याह—न हि तत्सर्वसामर्थ्यं नामान्यत् किञ्चित्, प्रत्येकतैव ॥ ३११ ॥ एतच्च परिवृतमेवेति दर्शयति—'अत्रे'त्यादिना—

अत्र चोक्त न चाप्येषां, तत्स्वभावत्वकल्पना । साध्वीत्यतिप्रसङ्गादेरन्यथाऽप्युक्तिसम्भवात् ॥ ३१२ ॥

अत्र च तस्यैकत्वपक्षे एक एवायत इत्यादि, न चाप्येषां—समग्रफलानां तत्स्वभावत्वकल्पना, सर्व एव समग्रास्तज्जननस्वभावाः एवमपि सर्वं तज्जन्यस्वभावमेवैत्येवंरूपा 'साध्वी' सती, कस्मात् साध्वीत्याह—अतिप्रसङ्गादिदोषात्, समग्रान्तराण्यपि तज्जननस्वभावानीत्यतिप्रसङ्गः, भाविभावादेक एव तज्जननस्वभावः शेषा उपनिमित्ततया इत्यादि। अत्र निबन्धनमाह—अन्यथाऽपि एवमपि यथोक्तसमग्रान्तराण्यपीत्यादि 'उक्तिसम्भवात्' वचनाविरोधात्, युक्तिवैकल्यं तु साधारणमित्यभिप्रायः ॥ ३१२ ॥ मौलं विकल्पमधिकृत्य पक्षान्तरमाह—'अथे'त्यादिना—

अथान्यत्रापि सामर्थ्यं, रूपादीनां प्रकल्प्यते । न तदेव तदित्येव, नाना चैकत्र तत्कृतः ? ॥ ३१३ ॥

सामग्रीभेदतो यश्च, कार्यभेदः प्रगीयते । नानाकार्यसमुत्पाद, एकस्याः सोऽपि बाध्यते ॥ ३१४ ॥

उपादानादिभावेन, न चैकस्यास्तु सङ्गता । युक्त्या विचार्यमाणेह, तदनेकत्वकल्पना ॥ ३१५ ॥

रूप येन स्वभावेन, रूपोपादानकारणम् । निमित्तकारण ज्ञाने, तत्तेनान्येन वा भवेत् ? ॥ ३१६ ॥

॥ ३१७ ॥ अथान्येन बलाद्रूपं, द्विस्वभावं प्रसज्यते ॥ ३१७ ॥

यदि तेनैव विज्ञानं, बोधरूपं न युज्यते । अथान्येन बलाद्रूपं, द्विस्वभावं प्रसज्यते ॥ ३१८ ॥

अबुद्धिजनकव्यावृत्त्या चेद्बुद्धिप्रसाधकः । रूपक्षणो ह्यबुद्धित्वात्, कथं रूपस्य साधकः? ॥ ३१८ ॥

स हि व्यावृत्तिभेदेन, रूपादिजनको ननु । उच्यते व्यवहारार्थमेकरूपोऽपि तत्त्वतः ॥ ३१९ ॥

अगन्धजननव्यावृत्त्याऽयं कस्मान्न गन्धकृत्? । उच्यते तदभावाच्चेद्भावोऽन्यस्याः प्रसज्यते ॥ ३२० ॥

एवं व्यावृत्तिभेदेऽपि, तस्यानेकस्वभावता । बलादापद्यते सा चायुक्ताऽभ्युपगमक्षतेः ॥ ३२१ ॥

विभिन्नकार्यजननस्वभावाश्चक्षुरादयः । यदि ज्ञानेऽपि भेदः स्यात्, न चेद्भेदो न युज्यते ॥ ३२२ ॥

सामग्र्यपेक्षयाऽप्येवं, सर्वथा नोपपद्यते । यद्धेतुहेतुमद्भावस्तदेषाऽप्युक्तिमात्रकम् ॥ ३२३ ॥

अथान्यत्रापि–बुद्ध्यादिव्यतिरेकेण स्वसन्ततावपि सामर्थ्यं जननं प्रति रूपादीनां समग्राणां प्रकल्प्यते, अत्र दोषमाह–न 'तदेव' बुद्ध्यादिजननसामर्थ्यमेव तद् अन्यत्रापि सामर्थ्यमिति, अन्यस्यापि बुद्ध्यादित्वप्राप्तेः, एवं नाना तदित्यापादयति, नानात्मकानां चैकत्र–एकस्वभावे रूपादौ 'तत्' सामर्थ्यं कुतः? सर्वथैकत्वविरोधादिति ॥ ३१३ ॥ परपक्ष एव दोषान्तरमाह–'सामग्री'त्यादिना—सामग्रीभेदतो यश्च तत्र परैः कार्यभेदः प्रगीयते, तस्या एव कारणत्वेन, नानाकार्यसमुत्पादः स्वसन्तत्यपेक्षया एकस्याः, सोऽपि बाध्यते, एकैककारणत्वेन ॥ ३१४ ॥ अत्रैव परिहारदोषमाह–'उपादाने'-

स्यादिना—'उपादानादिभेदे(भेद)न' समागोपादानेन, न सहकारिलक्षणेन, न चैकस्या एव सामग्र्याः 'सकला'
न्याय्या युक्त्या विचार्यमाणेह-सन्न्यायमार्गे 'तदनेकस्वकल्पना' अनेकास्ताः सामग्र्य इत्येवंरूपा ॥ ३१५ ॥ यथा न
सकला तयाऽभिधित्सुराह—'रूप'मित्यादि, रूपं येन 'स्वभावेन' सामर्थ्येन 'रूपोपादानकारणं' समार्गं, निमित्तका
रणं ज्ञाने आत्मिकादौ वा तयैवान्येन वा भवेत्? ॥ ३१६ ॥ किमतः? इत्याह—'यदी'त्यादि, यदि तेनैव, येन रूपे
णोपादानकारणम्, अत्र दोष'-विज्ञानं बोधरूपं न युज्यते, रूपवदेव, अथान्येन, अत्रापि दोषः, यतद्रूपमेवं सति
द्विस्वभावं प्रसज्यते, अनिष्टं चैतदिति ॥ ३१७ ॥ इहैव पराभिप्रायमाशङ्क्य परिहरमाह—'अबुद्धी'त्यादि, 'अबुद्धिज
नकव्यावृत्त्या' अबुद्धिजनकेभ्यो व्यावृत्त इतिकृत्वा यदि 'बुद्धिप्रसाधकः' बुद्धिजनको रूपक्षण इष्यते, एतदाशङ्क्याह-
रूपक्षण एव प्रस्तुतः एवं तर्हि अबुद्धित्वात्कारणात्कथं रूपस्य साधकः?, तस्याप्यबुद्धित्वादिति ॥ ३१८ ॥ पराभिप्राय
मभिधित्सुराह—'स ही'त्यादि, 'स हि' रूपक्षणः व्यावृत्तिभेदेन उक्तलक्षणेन 'रूपादिजनकः' रूपबुद्ध्यादिसाधकः
ननु उच्यते 'व्यवहारार्थं' उभयजन्मव्यवहारसिद्धये 'एकरूपोऽपि तत्त्वतः' अनेकजनकोऽनेकस्वभावोऽपि परमार्थतः
॥ ३१९ ॥ अत्रोत्तरम्—'अग घे'त्यादि, अगन्धजननव्यावृत्त्याऽयं रूपक्षणः कस्मान्न गन्धकृत्?, उच्यते—व्यवहारार्थं
मेव 'सद्भावात्' अगन्धजननव्यावृत्त्यभावाद् यदि (चेत्) नोच्यते, एवं सति भावः 'अन्यस्या' अबुद्धिजनकव्या
वृत्तेः प्रसज्यते, तात्त्विक एव ॥ ३२० ॥ ततः किमित्याह—एवं 'व्यावृत्तिभेदेऽपि' अनेकजननैकस्वभावपक्षेऽपि 'तस्य'
रूपादेः 'अनेकस्वभावता' चित्रस्वभावता 'बलादापद्यते' नियमात्प्राप्नोति, ततः किं?, सा चायुक्ताऽनेकस्वभावता,

कुतः? इत्याह–'अभ्युपगमक्षतेः' प्रतिज्ञातविरोधात् ॥ ३२१ ॥ दोषान्तरमाह—'विभिन्ने'त्यादि, विभिन्नकार्यजननस्वभावाश्चक्षुरादयः कारणविशेषाः यदीष्यन्ते ज्ञानेऽपि भेदः स्यात्, तत्कार्यत्वात्, न चेद्भिन्नकार्यजननस्वभावा भेदो न युज्यते रूपबुद्ध्यादेः ॥ ३२२ ॥ प्रस्तुतपक्षमुपसंहरति–'सामग्र्ये'त्यादिना—सामग्र्यपेक्षयाऽपि 'एवम्' उक्तन्यायात् सर्वथा नोपपद्यते 'यत्' यस्मात् हेतुहेतुमद्भाव इति, तस्मादेषाऽप्युक्तिमात्रकं सामग्रीति ॥ ३२३ ॥ अभ्युपगम्य हेतुफलभावं दोषमाह–'नाने'त्यादिना—

नानात्वाबाधनाच्चेह, कुतः स्वकृतवेदनम्? । सत्यप्यस्मिन् मिथोऽत्यन्तं, तद्भेदादिति चिन्त्यताम् ॥३२४॥
वास्यवासकभावाच्चेन्नैतत्तस्याप्यसम्भवात् । असंभवः कथं न्वस्य ?, विकल्पानुपपत्तितः ॥ ३२५ ॥
वासकाद्वासना भिन्ना, अभिन्ना वा भवेद् ? यदि । भिन्ना स्वयं तया शून्यो, नैवान्यं वासयत्यसौ ॥३२६॥
अथाभिन्ना न सङ्क्रान्तिस्तस्या वासकरूपवत् । वास्ये सत्यां च संसिद्धिर्द्रव्यांशस्य प्रजायते ॥३२७॥
असत्यामपि संक्रान्तौ, वासयत्येव चेदसौ । अतिप्रसङ्गः स्यादेवं, स च न्यायवहिष्कृतः ॥ ३२८ ॥
वास्यवासकभावश्च, न हेतुफलभावतः । तत्त्वतोऽन्य इति न्यायात्स चायुक्तो निदर्शितः ॥ ३२९ ॥
तत्तज्जननस्वभावं, जन्यभावं तथाऽपरम् । अतः स्वभावनियमान्नायुक्तः स कदाचन ॥ ३३० ॥

उभयोर्ग्रहणाभावे, न तथाभावकल्पनम् । तयोर्न्याय्य न चैकेन, द्वयोर्ग्रहणमस्ति च ॥ ३२१ ॥
एकमर्थं विजानाति, न विज्ञानद्वय यथा । विजानाति न विज्ञानमेकमर्थद्वय तथा ॥ ३२२ ॥
वस्तुस्थित्या तयोस्तत्त्वे, एकेनापि तथाग्रहात् । नो बाधक न चैकेन, द्वयोर्ग्रहणमस्त्यदः ॥ ३२३ ॥
तथाग्रहस्तयोर्नेतरेतरग्रहणात्मक । कदाचिदपि युक्तो यदत कथमबाधकम् ? ॥ ३२४ ॥
तथाग्रहे च सर्वत्राविनाभावग्रह विना । न धूमादिग्रहादेव, अनलादिगतिः कथम् ? ॥ ३२५ ॥

नानास्वापाधनाचेह भवन्मते कुतः स्वकृतवेदनं ?, तस्यप्यस्मिन्–हेतुफलभावे 'मिथ' परस्परम् 'अत्यन्त' सर्वथा 'तद्भेदात्' कर्तृभोक्तृभेदादिति चिन्त्यतामेतत् ॥ ३२४ ॥ अत्रैवाक्षेपपरिहाराभिधित्सयाऽऽह—'वास्यवासके'त्यादि, वास्यवासकभावाचेत् स्वकृतवेदन, तद्वासककर्तृत्वेन, नैतत्, तस्याप्यसम्भवात्, वास्यवासकभावस्यासम्भवः कथं न्वस्य ? इति परः, विकल्पानुपपत्तेरित्याचार्यः ॥ ३२५ ॥ एतत्प्रकटयन्नाह—'वासके'त्यादि, वासकात्तत्काद्वासना भिन्ना अभिन्ना वा भवेदिति द्वयी गतिः, यदि भिन्ना ततोऽयं दोषः–स्वयं तया शून्यो वासकः नैवान्यं वासयत्यसौ, अतद्वासन कत्वात् ॥ ३२६ ॥ प्रस्तुतमेवाह—'अथे'त्यादि, अथाभिन्ना वासकाद्वासना, ततोऽयं दोषः–न सङ्क्रान्तिः तस्याः, वास-करूपतदव्यतिरेकेण, वास्ये तस्यां च सङ्क्रान्तौ सिद्धिः नियोगतः एव द्रव्यांशस्य प्रसज्यते, तस्यैव तथाभवनात् ॥ ३२७ ॥ सत्येनाह—'असत्या'मित्यादि, असत्यामपि सङ्क्रान्तौ कथञ्चिद्वासयत्येव चेदसौ वासकः अतिप्रसङ्गः स्यादेवं, तदन्यवा

सनप्रसङ्गात्, सङ्क्रान्तिभावाविशेषात्, स च न्यायवहिष्कृतः अतिप्रसङ्गः, असमञ्जसत्वाद्व्यवस्थानुपपत्तेरिति ॥ ३२८ ॥ अनुपन्यसनीयश्चायमित्याह–'वास्ये'त्यादिना—वास्यवासकभावश्चायं भवत्कल्पितः न हेतुफलभावतः सकाशात्तत्त्वतोऽन्य इति, किन्तु स एव न्यायात्, स चायुक्तो निदर्शितः पूर्वमपि ॥ ३२९ ॥ पराभिप्रायमाह–'तत्त'दित्यादिना—'तत्' कारणं मृदादि 'तज्जननस्वभावं' घटादिकार्यजननस्वभावं यत् यस्मात्, जन्यभावं तथा 'परं' घटाद्यपि मृदादिजन्यस्वभावं यद् अतः स्वभावनियमादेव हेतुफलयोर्नायुक्तः सः कदाचन, हेतुफलभावः ॥३३०॥ अत्रोत्तरमाह–'उभयो'रित्यादिना—'उभयोः' हेतुफलयोर्ग्रहणाभावे सति न 'तथा भावकल्पनं' तज्जननस्वभावादिकल्पनं 'तयोः' हेतुफलयोर्न्याय्यं, वीजाभावात्, न चैकेन ग्राहकेण 'द्वयोः' भिन्नकालयोर्ग्रहणमस्ति 'वः' युष्माकम् ॥ ३३१ ॥ एतदेव दर्शयति–'एक'मित्यादिना—एकमर्थं विजानाति न विज्ञानद्वयं भिन्नकालं यथा क्षणिकत्वेन विजानाति न विज्ञानमेकमर्थद्वयं भिन्नकालमेव 'तथा' क्षणिकत्वेनैव ॥३३२॥ पराभिप्रायमाह–'वस्त्वि'त्यादिना—'वस्तुस्थित्या' पौर्वापर्यभावेन 'तयोः' हेतुफलयोः 'तत्त्वे' तज्जननादिभावत्वे एकेनापि ग्राहकेण 'तथाग्रहात्' स्वरूपेण ग्रहणात् 'नो वाधकं' न पीडाकरं, किमित्याह–न चैकेन द्वयोर्ग्रहणमस्त्यदः, एतदुक्तं, तथा ग्रहणमन्तरेण तदग्रहणप्रसङ्गादित्यभिप्रायः ॥ ३३३ ॥ एतत्परिजिहीर्षयाऽऽह—'तथे'त्यादि, 'तथाग्रहः' तज्जननादिभावग्रहः 'तयोः' हेतुफलयोः 'न' नैव, किंभूतः ? इत्याह–'इतरेतरग्रहणात्मकः' अन्योन्यग्रहणरूपः कदाचिदपि युक्तो, यत् अन्योन्यावधिकत्वेन, अतः कथमवाधकं न चैकेनेत्यादि पूर्वोक्तं ?, वाधकमेव ॥ ३३४ ॥ दोषान्तरमभिधित्सुराह—'तथाग्रह' इत्यादि, 'तथाग्रहे च' तज्जननादिभावग्रहे

उभयोर्ग्रहणाभावे, न तथाभावकल्पनम्। तयोरन्यस्य न चैकेन, द्वयोर्ग्रहणमस्ति च ॥ ३३१ ॥
एकमर्थं विजानाति, न विज्ञानद्वयं यथा। विजानाति न विज्ञानमेकमर्थद्वयं तथा ॥ ३३२ ॥
वस्तुस्थित्या तयोस्तत्त्वे, एकेनापि तथाग्रहात्। नो बाधक न चैकेन, द्वयोर्ग्रहणमस्त्यदः ॥ ३३३ ॥
तथाग्रहस्तयोर्नेतरेतरग्रहणात्मकः। कदाचिदपि युक्तो यदत कथमबाधकम्? ॥ ३३४ ॥
तथाग्रहे च सर्वत्राविनाभावग्रह विना। न धूमादिग्रहादेव, अनलादिगति कथम्? ॥ ३३५ ॥

नानात्वाबाधनाच्चेह भवन्मते कुतः स्वकृतवेदनं?, सत्यप्यस्मिन्-हेतुफलभावे 'मिथः' परस्परम् 'अत्यन्त' सर्वथा 'तद्भेदात्' कर्तृभोक्तृभेदादिति चिन्त्यतामेतत् ॥ ३२४ ॥ अत्रैवाक्षेपपरिहाराभिधित्सयाऽऽह—'वास्यवासके'त्यादि, वास्यवासकभावाच्च स्वकृतवेदनं, तद्वासककर्तृत्वेन, नैतत्, तस्याप्यसम्भवात्, वास्यवासकभावस्यासम्भवः कथं न्वस्य? इति परः, विकल्पानुपपत्तेरित्याचार्यः ॥ ३२५ ॥ एतदेवाह—'वासके'त्यादि, वासकात्तत्क्षणाद्वासना भिन्ना अभिन्ना वा भवेदिति द्वयी गतिः, यदि भिन्ना ततोऽयं दोषः—स्वयं तया शून्यो वासकः नैवान्यं वासयत्यसौ, अतदात्मकत्वात् ॥ ३२६ ॥ प्रस्तुतमेवाह—'अथे'त्यादि, अथाभिन्ना वासकाद्वासना, ततोऽयं दोषः—न सङ्क्रान्तिः तस्याः, वासकरूपवत्तद्व्यतिरेकेण, वास्ये तस्यां च सङ्क्रान्तौ सिद्धिः नियोगतः एव द्रव्याधस्य प्रसज्यते, तस्यैव तथाभवनात् ॥ ३२७ ॥ अत्रैवाह—'असत्या'मित्यादि, असत्यामपि सङ्क्रान्तौ कथञ्चिद्वासयत्येव चेतसी वासकः अतिप्रसङ्गः स्यादेवं, तदन्यवा-

सनमसङ्गात्, सङ्क्रान्तिभावाविशेषात्, स च न्यायबहिष्कृतः अतिप्रसङ्गः, असमञ्जसत्वाद्व्यवस्थानुपपत्तेरिति ॥ ३२८ ॥ अनुपन्यसनीयश्चायमित्याह—'वास्ये'त्यादिना—वास्यवासकभावश्चायं भवत्कल्पितः न हेतुफलभावतः सकाशात्तत्त्वतोऽन्य इति, किन्तु स एव न्यायात्, स चायुक्तो निदर्शितः पूर्वमपि ॥ ३२९ ॥ पराभिप्रायमाह—'तत्त'दित्यादिना—'तत्' कारणं मृदादि 'तज्जननस्वभावं' घटादिकार्यजननस्वभावं यत् यस्मात्, जन्यभावं तथा 'परं' घटाद्यपि मृदादिजन्यस्वभावं यद् अतः स्वभावनियमादेव हेतुफलयोर्नायुक्तः सः कदाचन, हेतुफलभावः ॥३३०॥ अत्रोत्तरमाह—'उभयो'रित्यादिना—'उभयोः' हेतुफलयोर्ग्रहणाभावे सति न 'तथा भावकल्पनं' तज्जननस्वभावादिकल्पनं 'तयोः' हेतुफलयोर्न्याय्यं, वीजाभावात्, न चैकेन ग्राहकेण 'द्वयोः' भिन्नकालयोर्ग्रहणमस्ति 'वः' युष्माकम् ॥ ३३१ ॥ एतदेव दर्शयति—'एक'मित्यादिना—एकमर्थं विजानाति न विज्ञानद्वयं भिन्नकालं यथा क्षणिकत्वेन विजानाति न विज्ञानमेकमर्थद्वयं भिन्नकालमेव 'तथा' क्षणिकत्वेनैव ॥३३२॥ पराभिप्रायमाह—'वस्त्वि'त्यादिना—'वस्तुस्थित्या' पौर्वापर्यभावेन 'तयोः' हेतुफलयोः 'तत्त्वे' तज्जननादिभावत्वे एकेनापि ग्राहकेण 'तथाग्रहात्' स्वरूपेण ग्रहणात् 'नो बाधकं' न पीडाकरं, किमित्याह—न चैकेन द्वयोर्ग्रहणमस्त्यदः, एतदुक्तं, तथा ग्रहणमन्तरेण तदग्रहणप्रसङ्गादित्यभिप्रायः ॥ ३३३ ॥ एतत्परिजिहीर्षयाऽऽह—'तथे'त्यादि, 'तथाग्रहः' तज्जननादिभावग्रहः 'तयोः' हेतुफलयोः 'न' नैव, किंभूतः? इत्याह—'इतरेतरग्रहणात्मकः' अन्योन्यग्रहणरूपः कदाचिदपि युक्तो, यत् अन्योन्यावधिकत्वेन, अतः कथमबाधकं न चैकेनेत्यादि पूर्वोक्तं ?, बाधकमेव ॥ ३३४ ॥ दोषान्तरमभिधित्सुराह—'तथाग्रह' इत्यादि, 'तथाग्रहे च' तज्जननादिभावग्रहे

यान्योन्यायषिके सति 'सर्वत्र' वस्तुनि, किमित्याह–'अविनाभावग्रहं विना' नालिकेरद्वीपवासिनोऽपि न धूमादिग्र हावेय केवलादनलादिगतिः कथम्?, अनलादिजन्यस्वभावेन वैरपि नीत्या तद्ग्रहणात्, कोऽत्रापवादहेतुरिति भावः ॥ ३३५ ॥ अत्रैयाक्षेपपरिहाराषभिधातुकाम आह—

समनन्तरवैकल्य, तत्रेत्यनुपपत्तिकम् । तुल्ययोरपि तद्भावे, हन्त ! कचिददर्शनात् ॥ ३३६ ॥
न तयोस्तुल्यतैकस्य, यस्मात्कारणकारणम् । ओघात् तद्धेतुविपर्यं, नत्स्वेवमितरस्य च ॥ ३३७ ॥
यः केवलानलमादिज्ञानकारणकारण । सोऽप्येव न च तद्धेतोस्तज्ज्ञानादपि तद्गति ॥ ३३८ ॥
तज्ज्ञान यत्र वै धूमज्ञानस्य समनन्तर । तथाऽभूदित्यतो नेह, तज्ज्ञानादपि तद्गतिः ॥ ३३९ ॥
तथेति हन्त! कोऽन्वर्थ ?, तच्चथाभावतो यदि । इतरत्रैकमेवेत्थ, ज्ञान तद्भावादि भाव्यताम् ॥ ३४० ॥
तदभावेऽन्यथा भावस्तस्य सोऽस्यापि विद्यते । अनन्तरचिरातीत, तत्पुनर्वस्तुतः समम् ॥ ३४१ ॥
अभिज्ञानजमेतेन, धूमज्ञान स्वभावतः । तथा विकल्पकृन्नान्यदिति प्रत्युक्तमिष्यताम् ॥ ३४२ ॥
अथ कथञ्चिदेकेन, तयोरग्रहणे सति । तथाऽप्रतीतितो न्याय्य, न तथाभावकल्पनम् ॥ ३४३ ॥
प्रत्यक्षानुपलम्भाभ्यां, हन्तैव साध्यते कथम् ? । कार्यकारणता तस्मात्तद्भावादेरनिश्चयात् ॥ ३४४ ॥

न पूर्वमुत्तरं चेह, तदन्याग्रहणाद् ध्रुवम् । गृह्यतेऽत इदं नातो, न त्वतीन्द्रियदर्शनम् ॥ ३४५ ॥
विकल्पोऽपि तथा न्यायाद्, युज्यते न ह्यनीदृशः । तत्संस्कारप्रसूतत्वात्, क्षणिकत्वाच्च सर्वथा ॥३४६॥
नेत्थं बोधान्वयाभावे, घटते तद्विनिश्चयः । माध्यस्थ्यमवलम्ब्यैतत्, चिन्त्यतां स्वयमेव तु ॥ ३४७ ॥

'समनन्तरे'त्यादि, स्यात्—समनन्तरवैकल्यं तत्र नालिकेरद्वीपवासिनि इत्येतत् 'अनुपपत्तिकम्' अयुक्तिमत्, कुतः ? इत्याह—'तुल्ययोरपि' समनन्तरयोः 'तद्भावे' धूमादिग्रहभावे हन्त ! 'क्वचित्' अगृहीताविनाभावे नालिकेरद्वीपवासिनि समुद्रदर्शनानन्तरधूमग्रहादप्यदर्शनात्, गृहीताविनाभावस्यैव दर्शनादनलादिगतेरिति ॥ ३३६ ॥ अत्राह—'न तयो'रित्यादि, न 'तयोः' गृहीताविनाभावनालिकेरद्वीपवासिसमनन्तरयोस्तुल्यता, कुतः ? इत्याह—'एकस्य' गृहीताविनाभावसमनन्तरस्य यस्मात्कारणकारणं—दीर्घपारम्पर्येण 'ओघत' ओघेन सामान्येन 'तद्धेतुविषयं' गृह्यमाणधूमहेत्वग्निविषयं, नत्वेवमितरस्य तु—नालिकेरद्वीपवासिनः, तेन सदा तदग्रहणादिति ॥ ३३७ ॥ उत्तरमभिधातुकाम आह—'यः केवले'त्यादि, 'यः' कश्चिन्नालिकेरद्वीपवासिसमनन्तरः 'केवलानलग्राहिज्ञानकारणकारणः' इत्याह अयो गुडागारादग्निज्ञानकारणः 'सोऽप्येवम्' इत्योघात्तद्धेतुविषय एव, न च 'तद्धेतोरपि' एवं निमित्तसमनन्तरहेतोरपि, (तद्) 'ज्ञानात्' नालिकेरद्वीपवासिधूमज्ञानाद् अपि, अपिशब्द उभयथाऽपि संबध्यते, 'तद्गतिः' अनलादिगतिरिति, एतदाकूतः ॥ ३३८ ॥ 'तज्ज्ञान'मिति, तज्ज्ञानं 'यत्' यस्मात् न चैव धूमज्ञानस्य तदुत्तरकालभाविनः 'समनन्तरः' उपादानहेतु-

स्वभावभूत् (अतः नेह धूमज्ञानादपि अनलगतिः) ॥ ३३९ ॥ (अत्रोत्तर) 'तथेती'त्यादिना—तथेति हन्त कोऽन्वर्थः यदुक्तं न तथाऽभूदित्यत्र, 'तत्सद्भावात' इत्यग्निज्ञानस्यैव धूमज्ञानभावेन भावो यदि, मा भूदित्ययमर्थः, इत्येतदा शङ्क्याह—'इतरथे' अविनाभावग्राहिणि प्रमाणे एकमेवेत्थं ज्ञानं, तदभावेन, धूमानलयोर्हि भाव्यतामेतद्, अन्यथा विशेषासिद्धेः ॥ ३४० ॥ पक्षान्तरोपन्यासेनाधिकृतमेव समर्थयन्नाह—'तद्भाव' इत्यादिना—'तद्भावे' अग्निज्ञानाभावेन अन्यथा यदि तदभावो नेष्यते ततः भावः 'तस्य' धूमज्ञानस्याभ्युपगतो भवति, प्रकारान्तराभावात्, ततः किमित्याह—'स' तद्भावे भावः 'अस्यापि' विवक्षितनालिकेरद्वीपवासिधूमज्ञानस्य विद्यते, यथोक्ताग्निज्ञानाभावात्, स्यादेतत्—तच्चिरातीतमस्य तदित्याह सः, तदस्यानन्तरमिति, एषामप्ययमेव भेदः, इत्याशङ्क्याह—'अनन्तरचिरातीतत्वं पुनरतीतत्वेन समं धूमज्ञानभवनकाले, तदभावाविशेषादित्यभिप्रायः ॥ ३४१ ॥ एतेन यदप्युक्तं तदाह—'अग्नी'त्यादिना —अग्निज्ञान(ज)म् 'एतेन' तदस्वभावतापरिज्ञानप्रतिपादनेन धूमज्ञानं स्वभावतः तथा 'विकल्पकृत्' अग्निजन्योऽयं धूम इति विकल्पकरणशीलं 'नान्यत्' धूमज्ञानम् 'इति' एतत् 'प्रत्युक्तं' परिहृतमित्युच्यताम्, अविशेषादिति ॥ ३४२ ॥ प्रस्तुत नियमयति—अतः कथञ्चित् 'एकेन' ग्राहकेण 'तयो' हेतुफलयोरग्रहणे सति न्यायतः, किमित्याह—'तथाऽप्रतीतितः' तदितरावविकल्पेनाप्रतीतेः 'न्याय्यं न' युक्तमत्र, किमित्याह—'तथा भावकल्पन' प्रक्रमात् हेतुफलयोस्त जननस्वभावस्याविकल्पनमित्यर्थः ॥ ३४३ ॥ एवं च सति किमित्याह—'प्रत्यक्षे'त्यादि, प्रत्यक्षानुपलम्भाभ्यां परोदिताभ्यां हन्तेयं 'साध्यते' ज्ञायते कथं?, कार्यकारणता न साध्यत इति भावः, कुतः? इत्याह—तस्मात्कारणात् 'तज्ज्ञा-

वादेः' कार्यभावादेः, आदिशब्दादन्यतोऽभावादिग्रह इति, अस्याऽनिश्चयात्, अनिश्चयश्च सर्वथोभयानुपलम्भादिति ॥ ३४४ ॥ एतदेव स्पष्टयन्नाह—'न पूर्व'मित्यादि, न पूर्वमुत्तरं च 'इह' परदर्शने 'तदन्याग्रहणात्' प्रतियोग्यग्रहणाद्धेतोः 'ध्रुवं' निश्चितं गृह्यते, अतः किमित्याह–अत इदम्–अग्न्यादेर्धूमादि, नातो जलादेरेव, न त्वतीन्द्रियदर्शनमिति ॥ ३४५ ॥ एवं च सति किमित्याह—'विकल्पोऽपी'त्यादि, 'विकल्पः' निश्चयात्मकः, कुतः ? इत्याह–'तत्संस्कारप्रसूतत्वात्' अपूर्वोत्तरसंवेदनसंस्कारोपजातत्वात्, उपपत्त्यन्तरमाह–'क्षणिकत्वाच्च' सर्वथा निरन्वयनश्वरत्वेन, तथारूपानुभूयमानतदात्मभूतान्वयाभावादित्यर्थः ॥ ३४६ ॥ उपसंहरन्नाह—'नेत्थ'मित्यादि, न 'इत्थम्' उक्तेन प्रकारेण बोधान्वयाभावे सति घटते 'तद्विनिश्चयः' तत्तज्जननादिभावनिश्चयः, माध्यस्थ्यमवलम्ब्य 'एतत्' अनन्तरोदितं चिन्त्यतां स्वयमेव तु ॥ ३४७ ॥ पराभिप्रायमाह–'अग्न्यादी'त्यादिना—

अग्न्यादिज्ञानमेवेह, न धूमज्ञानतां यतः । व्रजत्याकारभेदेन, कुतो बोधान्वयस्ततः ? ॥ ३४८ ॥
तदाकारपरित्यागात्तस्याकारान्तरस्थितिः । बोधान्वयः प्रदीर्घैकाध्यवसायप्रवर्त्तकः ॥ ३४९ ॥
स्वसंवेदनसिद्धत्वात्, न च भ्रान्तोऽयमित्यपि । कल्पना युज्यते युक्त्या, सर्वभ्रान्तिप्रसङ्गतः ॥ ३५० ॥
प्रदीर्घाध्यवसायेन, नश्वरादिविनिश्चयः । अस्य च भ्रान्ततायां यत्तत्तथेति न युक्तिमत् ॥ ३५१ ॥
तस्मादवश्यमेष्टव्या, विकल्पस्यापि कस्यचित् । येन तेन प्रकारेण, सर्वथाऽभ्रान्तरूपता ॥ ३५२ ॥

सत्यामस्यां स्थितोऽस्याकस्मुकधस्यायययोगत । धोधान्वयोऽद्लोत्पत्त्यमावाश्चातिप्रसङ्गत ॥ ३५३ ॥
अन्यादृशपदार्थेभ्यः, स्वयमन्यादृशोऽप्ययम् । यतश्चेष्टस्ततो नास्मात्तत्रासन्दिग्धनिश्चयः ॥ ३५४ ॥
तच्चजननमावत्वे, ध्रुव तद्भावसङ्गति । तस्यैव मावो नान्यो यज्जन्याश्च जनन तथा ॥ ३५५ ॥
एव तज्जन्यमावत्वेऽप्येषा भाव्या विचक्षणैः । तदेव हि यतो माव, स चेतरसमाश्रय ॥ ३५६ ॥
इत्येवमन्वयापत्ति, शब्दार्थादेव जायते । अन्यथा कल्पन चास्य, सर्वथा न्यायबाधितम् ॥ ३५७ ॥
तद्रूपशक्तिशून्यं तत्कार्यं कार्यान्तर यथा । व्यापारोऽपि न तस्यापि, नापेक्षाऽसत्त्वत कश्चित् ॥३५८॥
तथाऽपि तु तयोरेव, तत्स्वभावत्वकल्पनम् । अन्यत्रापि समानत्वात्, केवल ध्यान्ध्यसूचकम् ॥३५९॥

मध्याविज्ञानमेव कारणभूतमिह लोके न धूमज्ञानतां 'यतः' यस्मात् 'भ्रमति' गच्छति, केन हेतुनेत्याह—आकारभे वेन, स्वाकारात्मनोः तयोराकारभेदात्, यत एवं कुतो बोधान्वयस्तत्र—तथाभावरूपात् तत इति ॥ ३४८ ॥ अथोत्तरमाह —'तदाकारे'त्यादि, 'तदाकारपरित्यागात्' अभावाकारपरित्यागेन 'तत्र' बोधितस्तस्य 'आकारान्तरस्थिति' धूमाद्याकारेण स्थानं बोधान्वयः, सर्वथाऽसत्स्वभावविरोधात्, स च मदीयार्थैकाध्यवसायप्रवर्तकः, तस्यैव तथाभवना दिति ॥ ३४९ ॥ न्याम्योऽयमिति परिहरति—'स्वसंवेदने'त्यादिना—'स्वसंवेदनसिद्धत्वात्' तथाऽऽलोचनानुभवेन न च

भ्रान्तः 'अयं' अन्वयः 'इत्यपि' एवम्भूताऽपि कल्पना 'युज्यते' घटते युक्त्या, कुतः? इत्याह—'सर्वभ्रान्तिप्रसङ्गतः' तदन्यानुभवस्यापि, अविगानानुभवनाविशेषात् ॥ ३५० ॥ एतदेव स्पष्टयति—'प्रदीर्घे'त्यादिना—'प्रदीर्घाध्यवसायेन' सर्वथा क्षणभेदानुभवात् 'नश्वरादिविनिश्चयः' क्षणिकत्वादिपरिच्छेदस्तथाऽनुभूतेः, 'अस्य च' प्रदीर्घाध्यवसायस्य भ्रान्ततायां तथा-अतत्परिच्छेदात्मकतायां 'यत्' यस्मान्नश्वरादि 'तत्' अवसितं तथेति न युक्तिमत्, भ्रान्तबोधावसित-त्वात् द्विचन्द्रवत् ॥ ३५१ ॥ यत एवम्—'तस्मा'दित्यादि, यस्मादनन्तरोदितो दोषस्तस्मादवश्यम् 'एष्टव्या' स्वीक-र्त्तव्या विकल्पस्यापि 'कस्यचित्' नश्वरादिविषयस्य येन तेन प्रकारेण-तथाविधसंस्कारोत्पादादिना सर्वथा 'अभ्रान्तरू-पता' स्वविषयनिश्चयरूपा साधयिष्यत्येवेत्यभिप्रायः ॥ ३५२ ॥ एतदभिधातुमाह—'सत्या'मित्यादि, सत्याम् 'अस्याम्' अभ्रान्ततायां स्थितोऽस्माकं तत्र 'उक्तवत्' यथोक्तं प्राक् 'न्याययोगतः' तथाऽनुभवसम्बन्धेन, कः स्थितः? इत्याह—'बोधान्वयः' बोधाविच्छेदः, उपपत्त्यन्तरम्—अदलोत्पत्त्यभावाच्च न ह्यसत्सत्संभवति, कुतः? इत्याह—'अतिप्रसङ्गतः' असतः सद्भावे तद्वत्तदन्यभावापत्तेरिति ॥ ३५३ ॥ अत्रोपचयमभिधित्सुराह—'अन्यादृशो'त्यादि, अन्यादृशेभ्यः पदा-र्थेभ्यः—अनित्यत्वादिरूपेभ्यः स्वयमन्यादृशोऽपि 'अयं' नित्यत्वादिग्रहरूपः यतश्चेष्टस्ततो न 'अस्मात्' अप्रत्ययिताद्विक-ल्पात् तत्रासन्दिग्धनिश्चयः, अनित्यत्वादौ, व्यभिचारांशकाऽनिवृत्तेरिति ॥ ३५४ ॥ परिहारमूलमधिकृत्याह—'तत्तादि'-त्यादि, 'तत्तज्जननभावत्वे'तस्य—कारणस्य मृदादेः घटादिकार्यजनस्वभावत्वे, किमित्याह—'ध्रुवं तद्भावसङ्गतिः' निश्चितं कारणभावपरिणतिः कार्ये, कुतः? इत्याह—'तस्यैव भावो नान्यो यत्' तस्यैव—कारणस्यैव भावः—स्वसत्तालक्षणः

नाम्यो—नार्थान्तरभूतोऽस्त्यभसमात् यस्—यस्मात्, 'जन्याच्च जननं तथा' तथा जन्यात्—कार्यात् जननम्—उत्पत्ति लक्षणं, नान्यदिति, अयमत्र भावार्थः—मृत् घटजननस्वभावेति मृदः पर्यायं स्वभावः—आत्मीया सत्ता यदुत घटजन्म, यदा च तस्या एवेयमात्मीया सत्ता तदा सैव तथाभूतेति तत्त्वार्थसंगतिः ॥ १५५ ॥ कार्यमधिकृत्याह—'एव'मित्यादि, 'एवम्' उक्तेन न्यायेन 'तज्जन्यस्वभावत्वेऽपि' मृदादिकारणजन्यस्वभावत्वेऽपि घटादिकार्यस्य 'एषा' तत्स्वभावसङ्गति-र्भाव्या 'विचक्षणैः' न्यायज्ञैः, एतदेवाह—तदेव हि यतो 'भावः' अन्यत्वमेव यस्माद् घटादेः स्वभावतः स्वसत्तालक्षणः, स च 'इतरसमाश्रय' मृदादिकारणसमाश्रयः, एतदुक्तं भवति—मृदो मृज्जन्यस्वभाव इति मृज्जन्या मृत्कार्या सत्ता घटस्य, क्रियत इति च कार्या, ततश्च मृदादिक्रियेति मन्तव्या, तदव्यतिरिक्ता तत्क्रियेति ॥ १५६ ॥ तस्या एव तथाभावमुपसंह-रन्नाह—'इत्येव'मित्यादि, 'एवम्' उक्तेन प्रकारेण 'अन्वयापत्ति' भावाविच्छेदलक्षणा शब्दार्थविरोधजायते, तज्जन-नभावमित्यादिलक्षणात्, अन्यथा कल्पन चास्य—शब्दार्थस्य तज्जननस्वभावमिति, किमुक्तं भवति ?—तदनन्तरं तत्त्वाद इत्येवमादि, सर्वथा न्यायबाधितं, यथाऽऽलोच्यते त्वयादि न तथा तथेति ॥१५७॥ एतदेव भावयति—'तद्रूपे'त्यादिना— 'तद्रूपशक्तिशून्यं' मृदादिकारणरूपशक्तिशून्यं 'तत्कार्यं' घटादि तदनन्तरभावित्वेऽपि कार्यान्तरं, यथा पदार्थान्वयी-भावो न परनीत्या तथा व्यापारोऽपि न कारणस्य कार्ये कश्चित्, निर्व्यापारत्वात्सर्वधर्माणां, तथा 'तस्यापि' कार्यस्य नापेक्षा स्वसत्त्वप्रतिपत्तिं प्रति, 'असत्त्वतः' तुच्छत्वात् 'क्वचित्' विवक्षितकारणेऽन्यत्र वा, सर्वासत्त्वयोगादिति ॥१५८॥ तत्राप्येतत्सम्बन्धमेवाह—'तथाऽपी'त्यादिना, 'तथाऽपि तु' तद्रूपशक्त्यादिवैकल्येऽपि स्वदर्शनन्यायेन 'तयोरेव' मित्र-

क्षितयोर्हेतुफलयोः 'तत्स्वभावत्वकल्पनं' तत्तज्जननादिस्वभावत्वसमर्थनं वाङ्मात्रेण, 'अन्यत्रापि' अनभिप्रेतहेतुफलभावपक्षपिण्डघटादौ समानत्वात्, वाङ्मात्राभिधानेन किमित्याह–केवलं 'ध्यान्ध्यसूचकम्' अज्ञानसूचकं तत्स्वभावत्वकल्पनं परस्येत्यभिप्रायः ॥ ३५९ ॥ अत्रैव दोषान्तरमाह—'किं चे'त्यादिना—

किञ्चान्यत् क्षणिकत्वे व, आर्षार्थोऽपि विरुध्यते । विरोधापादनं चास्य, नाल्पस्य तमसः फलम् ॥३६०॥

इत एकनवते कल्पे, शक्त्या मे पुरुषो हतः । तेन कर्मविपाकेन, पादे विद्धोऽस्मि भिक्षवः ! ॥३६१॥

मे मयेत्यात्मनिर्देशस्तद्गतोक्ता वधक्रिया । स्वयमाप्तेन यत्तद्वः, कोऽयं क्षणिकताऽऽग्रहः? ॥ ३६२ ॥

सन्तानापेक्षयैतच्चेदुक्तं भगवता ननु । स हेतुफलभावो यत्तन्मे इति न सङ्गतम् ॥ ३६३ ॥

ममेति हेतुशक्त्या चेत्तस्यार्थोऽयं विवक्षितः । नात्र प्रमाणमत्यक्षा, तद्विवक्षा यतो मता ॥ ३६४ ॥

तद्देशना प्रमाणं चेत्, न साऽन्यार्था भविष्यति । तत्रापि किं प्रमाणं चेदिदं पूर्वोक्तमार्षकम् ॥३६५॥

तथाऽन्यदपि यत्कल्पस्थायिनी पृथिवी क्वचित् । उक्ता भगवता भिक्षूनामन्त्र्य स्वयमेव तु ॥ ३६६ ॥

पञ्च बाह्या द्विविज्ञेया, इत्यन्यदपि चार्षकम् । प्रमाणमवगन्तव्यं, प्रक्रान्तार्थप्रसाधकम् ॥ ३६७ ॥

क्षणिकत्वे यतोऽमीषां, न द्विविज्ञेयता भवेत् । भिन्नकालग्रहे ह्याभ्यां, तच्छब्दार्थोपपत्तितः ॥ ३६८ ॥

एककालग्रहे तु स्यात्तत्रैकस्याप्रमाणता । गृहीतग्रहणादेव, मिथ्या तथागतं वचः ॥ ३६९ ॥
इन्द्रियेण परिच्छिन्ने, रूपादौ तदनन्तरम् । यद्रूपादि ततस्तत्र, मनोज्ञानं प्रवर्त्तते ॥ ३७० ॥
एवं च न विरोधोऽस्ति, द्विविज्ञेयत्वभावत । पश्चानामपि चेष्यायावेतदप्यसमञ्जसम् ॥ ३७१ ॥
नैकोऽपि यद् द्विविज्ञेय , एकैकेनैव वेदनात् । सामान्यापेक्षयैतच्चेन्न तत्सत्त्वप्रसङ्गत ॥ ३७२ ॥
सत्त्वेऽपि नेन्द्रियज्ञानं, हन्त ! तद्गोचरं मतम् । द्विविज्ञेयत्वमित्येवं, क्षणभेदे न तत्त्वत ॥ ३७३ ॥
सर्वमेतेन विक्षिप्त, क्षणिकत्वप्रसाधनम् । तथाऽप्यूर्ध्वं विशेषेण, किञ्चित्तत्रापि वक्ष्यते ॥ ३७४ ॥

किञ्चान्यत्-क्षणिकत्वे च'-निरन्वयनश्वरत्वे 'यो' युष्माकम् 'आर्षार्थ' सिद्धान्तार्थो विरुध्यते, विरोधापादने च 'अस्य' आर्षार्थस्य नाशस्य 'तमस ' अज्ञानस्य फलं, किन्तु महापायहेतुत्वान्महत इति ॥ ३६० ॥ विरोधमेवाह- 'इत' इत्यादिना, बुद्धकण्टकवधे अपरिणतभिक्षूणां मिथ्यात्व, कथमयं कण्टकमप्यपश्यन् सर्वज्ञ इति, तदपोहायोक्तम्—'इत एकनवते कल्पे' इति, 'इत' वर्त्तमानात्कालादेकनवते कल्पेऽतिक्रान्ते सति 'शक्त्या मे पुरुषो हत' शक्त्या-प्रहरण विशेषेण मया पुरुषो व्यापादित, 'तेन कर्मविपाकेन' एतस्मिन् भवे कर्मोपनिपातं तदनुभावेन पादे विद्धोऽस्मि भि क्षव' !, पश्यन्नपि कण्टकं तस्य कर्मणो नियमवेदनीयत्वात्, नह्येतत् ममापि फलमदत्त्वा निवर्त्तत इति विदितमस्तु भव-

नाम् ॥३६१॥ एतदेव स्पष्टयति–'मे मये'त्यादिना—'मे मये'त्यात्मनिर्देशोऽयं वर्त्तते वक्तुः, तद्गतोक्ता वधक्रिया मया हत इति स्वयम् 'आप्तेन' बुद्धेन यत् 'तत्' तस्मात् 'वः' युष्माकं कोऽयं 'क्षणिकताऽऽग्रहः' अनित्यताऽभिनिवेशो, येना-सोऽन्यप्रमाणीक्रियत इति ॥ ३६२ ॥ अत्राक्षेपपरिहारावाह–'सन्ताने'त्यादिना—सन्तानापेक्षयैतच्चेत् "इत एकनवत" इत्याद्युक्तं 'भगवता' बुद्धेन, अत्रोत्तरं–ननु स हेतुफलभावः 'यत्' यस्मात्सन्तानः 'तत्' तस्मान्मे इति न सङ्गतं, तच्छ-क्त्याऽपि फलभोक्तोर्भेदादिति ॥ ३६३ ॥ 'ममे'त्यादि, ममतया हेतुपरम्परया तच्छक्त्या हत इति यदैव 'तस्य' बुद्धस्यार्थो ऽभिप्रेतः, अत्रोत्तरं–नास्ति अत्र–अर्थे प्रमाणं किञ्चिद्, अप्रत्यक्षा बुद्धविवक्षा यस्मादिष्टेति ॥ ३६४ ॥ तद्देशनेत्यादि, किं बुद्धविवक्षायां?, बुद्धदेशना प्रमाणमत्र 'क्षणिकाः संस्काराः' इत्यादि, इह समाधिः–न, साऽन्यार्था भविष्यति, आस्थानि-वृत्त्यर्थः, तत्रापि किं प्रमाणं चेत्?, यदुतास्थानिवृत्त्यर्थेति, इह समाधिः–इदं पूर्वोक्तमार्षम्–'इत एकनवत' इत्याद्येव, तथा चाप्ययमाप्येवं द्वयोरपि ॥ ३६५ ॥ किञ्च—'तथे'त्यादि, तथा 'अन्यदपि' आर्षं 'यत्' यस्मात्कल्पस्थायिनी पृथिवी 'कथिता' सूत्रान्तरे उक्ता 'भगवता' बुद्धेन भिक्षूनामन्त्र्य, अनेन तद्देशनामात्रमाह, स्वयमेव तु, "कप्पट्ठाइ पुहइ अभि-गाथा" इत्यादिवचनात् ॥ ३६६ ॥ 'पञ्चे'त्यादि, पञ्च बाह्यस्वरूपा रूपादय इन्द्रियमनोविज्ञानग्राह्या इत्यन्यदपि वाऽऽर्ष-मेतदेव. किमित्याह–प्रमाणमवगन्तव्यं, तंत्रयुक्त्या प्रक्रान्तार्थप्रसाधकं, कथञ्चिन्नित्यत्वप्रसाधकमित्यर्थः ॥ ३६७ ॥ कथमेतदेवमित्याह—'क्षणिकत्व' इत्यादि, क्षणिकत्वे यतः 'अमीषां' रूपादीनां न द्विविज्ञेयता भवेत्, कथमित्याह–भिन्नकालग्रह एव 'आभ्याम्' इन्द्रियमनोविज्ञानाभ्यां स्यात्, 'तच्छब्दार्थोपपत्तितः' तद्विज्ञेयत्वशब्दार्थोपपत्तेः ॥३६८॥

कथमेतदप्येवम्? इत्याह—'एककाले'त्यादि, एककालग्रहे त्विन्द्रियमनोविज्ञानाभ्यासात् तत्र 'एकस्य' इन्द्रियविज्ञा-
नादेरप्रमाणता, कुतः? इत्याह—गृहीतग्रहणात्मतः, एवं सति मिथ्या तायागतं वचः 'पञ्च बाह्या द्विज्ञेयाः' इत्येतत्
॥ १६९ ॥ पराभिप्रायमाह—'इन्द्रियेणे'त्यादिना—'इन्द्रियेण' इतीन्द्रियज्ञानेन परिच्छिन्ने तद्रूपादौ विषये 'तदनन्तरं'
इन्द्रियपरिच्छेद्यरूपाद्यनन्तरं यद्रूपादि तज्ज्ञानसमानकालभावि 'तत्र' इति तत इन्द्रियपरिच्छेद्यात्समनन्तरात् 'सद्य'
तज्ज्ञानसमानकालभाविनि रूपादौ मनोविज्ञानं प्रवर्तते, यथाऽऽह न्यायवादी—"स्वविषयानन्तरविषयसहकारिणेन्द्रिय
ज्ञानेन समनन्तरप्रत्ययेन जनितं मनोविज्ञानम्" ॥ १७० ॥ एतदेव निगमयति—'एवे'त्यादिना—'एवं च' अनन्तरोदित
न्याये सति न विरोधोऽस्ति वचनस्य, कुतः? इत्याह—'द्विविज्ञेयत्वभावतः' इन्द्रियमनोविज्ञेयत्वयोगात् पञ्चानामपि
चेत् रूपादीनां 'न्यायात्' उक्तलक्षणात्, अत्रोत्तरम्—'एतदप्यसमञ्जसम्' अयुक्तिमत्, न्यायादेव ॥ १७१ ॥ न्याय-
मेवाह—नैकोऽपीत्यादि, नैकोऽपि पञ्चानां 'यत्' यस्मादेव द्विविज्ञेयः, कुतः? इत्याह—'एकैकेन' इन्द्रियज्ञानादिनैव
वेदनात्, एकैकरूपादिग्रहणात्, न केषुचिद् द्विविज्ञेयत्वमस्तीत्यर्थः, 'सामान्यापेक्षयैतच्चेत्' रूपादिसामान्यापेक्षयैव
द्विविज्ञेयत्वं यदि, अत्रोत्तरं—'न' नैतदेवं, कुतः? इत्याह—'तत्सत्त्वमसङ्गतं' सामान्यसत्त्वमसङ्गतं, असतीन्द्रियादिविज्ञा
नायोगात् ॥ १७२ ॥ दोषान्तरमाह—'सत्त्वेऽपी'त्यादिना—सत्त्वेऽप्यस्य नेन्द्रियज्ञानं यथोदितं च मनोविज्ञानं च 'तत्रो
चरं' सामान्यगोचरं मतं, स्वलक्षणविषयत्वात्, उपसंहरमाह—द्विविज्ञेयत्वमिति 'एवम्' उक्तेन प्रकारेण क्षणभेदे न
पञ्चानां तत्स्यत इति ॥ १७३ ॥ उक्तफलमाह—'सर्व'मित्यादिना—सर्वमेतेन विहितं नाशहेत्वयोगादि क्षणिकत्वप्रसाधनं
यथाऽभ्यूह्य विशेषेण, पञ्चकमधिकृत्य, किञ्चिन्मात्रापि वस्त्विति ॥ १७४ ॥ विज्ञानवादमधिकृत्याह—

विज्ञानमात्रवादोऽपि, न सम्यगुपपद्यते । मानं यत्तत्त्वतः किञ्चिदर्थाभावे न विद्यते ॥ ३७५ ॥
न प्रत्यक्षं यतो भावालम्बनं न तदिष्यते । नानुमानं तथाभूततल्लिङ्गानुपलब्धितः ॥ ३७६ ॥
उपलब्धिलक्षणप्राप्तोऽर्थो यन्नोपलभ्यते । ततश्चानुपलब्ध्यैव, तदभावोऽवसीयते ॥ ३७७ ॥
उपलब्धिलक्षणप्राप्तिस्तद्धेत्वन्तरसंहतिः । एषां च तत्स्वभावत्वे, तस्यासिद्धिः कथं भवेत् ? ॥ ३७८ ॥
सहार्थेन तज्जननस्वभावानीति चेन्ननु । जनयत्येव सत्येवमन्यथाऽतत्स्वभावता ॥ ३७९ ॥
योग्यतामधिकृत्याथ, तत्स्वभावत्वकल्पना । हन्तैवमपि सिद्धो वः, कदाचिदुपलब्धितः ॥ ३८० ॥
अन्यथा योग्यता तेषां, कथं युक्त्योपपद्यते ?। न हि लोकेऽश्वमाषादेः, सिद्धा पक्त्यादियोग्यता ॥३८१॥
पराभिप्रायतो ह्येतदेवं चेदुच्यते न यत् । उपलब्धिलक्षणप्राप्तोऽर्थस्तस्योपलभ्यते ॥ ३८२ ॥
अतद्ग्रहणभावैश्च, यदि नाम न गृह्यते । तत एतावताऽसत्त्वं, न तस्यातिप्रसङ्गतः ॥ ३८३ ॥
विज्ञानं यत्स्वसंवेद्यं, नत्वर्थो युक्ति(क्त्य)योगतः । अतस्तद्वेदने तस्य, ग्रहणं नोपपद्यते ॥ ३८४ ॥
एवं चाग्रहणादेव, तदभावोऽवसीयते । अतः किमुच्यते मानमर्थाभावे न विद्यते ? ॥ ३८५ ॥

अर्थग्रहणरूप यत्तत्स्वसंवेद्यमिष्यते । तद्वेदने ग्रहस्तस्य, ततः किं नोपपद्यते ? ॥ ३८६ ॥
घटादिज्ञानमित्यादिसंवित्तेस्तत्प्रवृत्तितः । प्राप्तेरर्थक्रियायोगात्, स्मृतेः कौतुकभावत ॥ ३८७ ॥
ज्ञानमात्रे तु विज्ञानं, ज्ञानमेवेत्यदो भवेत् । प्रवृत्त्यादि ततो न स्यात्, प्रसिद्ध लोकशास्त्रयोः ॥३८८॥
तदन्यग्रहणे चास्य, प्रद्वेषोऽर्थेऽनिबन्धनः । ज्ञानान्तरेऽपि सदृश, तदसंवेदनादि यत् ॥ ३८९ ॥
युक्त्ययोगश्च योऽर्थस्य, गीयते जातिवाद्यत । मायादिभावद्वारेण, ज्ञानवादेऽप्यसौ समः ॥ ३९० ॥
नैकान्तग्राह्यभाव सद्ग्राहकाभावतो भुवि । ग्राहकैकान्तभाव तु, ग्राह्याभावादसङ्गतम् ॥ ३९१ ॥
विरोधाक्षोभयाकारमन्यथा तदसद् भवेत् । निःस्वभावत्वतस्तस्य, सत्तैव युज्यते कथम् ? ॥ ३९२ ॥
प्रकाशैकस्वभाव हि, विज्ञान तत्त्वतो मतम् । अकर्मकं तथा चैतत्, स्वयमेव प्रकाशते ॥ ३९३ ॥
यथाऽऽस्ते शेत इत्यादौ, विना कर्म स एव हि । तथोच्यते जगत्यस्मिंस्तथा ज्ञानमपीष्यताम् ॥३९४॥
उच्यतेऽसाम्प्रतमदः स्वयमेव विचिन्त्यताम् । प्रमाणाभावतस्तत्र, यथैतदुपपद्यते ॥ ३९५ ॥
एव न यच्चदात्मानमपि हन्त ! प्रकाशयेत् । अतस्तदिस्य नो युक्तमन्यथा न व्यवस्थिति ॥ ३९६ ॥

व्यवस्थितौ च तत्त्वस्य तथाभावप्रकाशकम्। ध्रुवं यतस्ततोऽकर्म्मकत्वमस्य कथं भवेत्? ॥ ३९७ ॥
व्यवस्थापकमस्यैवं, भ्रान्तं चैतत्तु भावतः। तथेत्यभ्रान्तमत्रापि, ननु मानं न विद्यते ॥ ३९८ ॥
भ्रान्ताच्चाभ्रान्तिरूपा न, युक्तियुक्ता व्यवस्थितिः। दृष्टा तैमिरिकादीनामक्षादाविति चेन्न तत्॥३९९॥
नाक्षादिदोषविज्ञानं, तदन्यभ्रान्तिवद्यतः। भ्रान्तं तस्य तथाभावे, भ्रान्तस्याभ्रान्तता भवेत् ॥ ४०० ॥
न च प्रकाशमात्रं तु, लोके क्वचिदकर्म्मकम्। दीपादौ युज्यते न्यायादतश्चैतदपार्थकम् ॥ ४०१ ॥
दृष्टान्तमात्रतः सिद्धिस्तदत्यन्तविधर्म्मिणः। न च साध्यस्य यत्तेन, शब्दमात्रमसावपि ॥ ४०२ ॥
किञ्च विज्ञानमात्रत्वे, न संसारापवर्गयोः। विशेषो विद्यते कश्चित्तथा चैतद्वृथोदितम् ॥ ४०३ ॥
चित्तमेव हि संसारो, रागादिक्लेशवासितम्। तदेव तैर्विनिर्मुक्तं, भवान्त इति कथ्यते ॥ ४०४ ॥
रागादिक्लेशवर्गो यन्न विज्ञानात् पृथग् मतः। एकान्तैकस्वभावे च, तस्मिन् किं केन वासितम्? ४०५
क्लिष्टं विज्ञानमेवासौ, क्लिष्टता तस्य यद्वशात्। नील्यादिवदसौ वस्तु, तद्वदेव प्रसज्यते ॥ ४०६ ॥
मुक्तौ च तस्य भेदेन, भावः स्यात्पटशुद्धिवत्। ततो बाह्यार्थतासिद्धिरनिष्टा संप्रसज्यते ॥ ४०७ ॥

प्रकृत्येव तथाभूत, तदेव क्लिष्टतेति चेत् । तदन्यूनातिरिक्तत्वे, केन मुक्तिर्विचिन्त्यताम् ॥ ४०८ ॥
असत्यपि च या ग्राह्ये, ग्राह्यग्राहकलक्षणे । द्विचन्द्रभ्रान्तिवद्भ्रान्तिरियं नः क्लिष्टतेति चेत् ॥ ४०९ ॥
अस्त्वेतास्किन्तु तद्धेतुर्भिन्नहेत्वन्तरोद्भवा । इयं स्याच्चिमिराभावे, न हीन्दुद्वयदर्शनम् ॥ ४१० ॥
नचासदेव तद्धेतुर्बोद(बोध)मात्र नचापि तत् । तदैव क्लिष्टतापत्तेरिति मुक्तिर्न युज्यते ॥ ४११ ॥
मुक्त्यभावे च सर्वैव, ननु चिन्ता निरर्थिका । भावेऽपि सर्वदा तस्या, सम्यगेतद्विचिन्त्यताम् ॥४१२॥
विज्ञानमात्रवादो यत् नेत्थं युक्त्योपपद्यते । प्राज्ञस्याभिनिवेशो न, तस्मादत्रापि युज्यते ॥ ४१३ ॥

'विज्ञाने'त्यादि, विज्ञानमात्रवादोऽपि परपरिकल्पितः न सम्यगुपपद्यते, कुतः ? इत्याह—मान यद्यस्य किंचित्, स्वतन्त्रनीत्यैव अर्थाभावे न विद्यते ॥ १७५ ॥ एतदेवाभिधित्सुराह—'न प्रत्यक्ष'मित्यादि, न प्रत्यक्षं मानमत्र, 'यत' यस्मात् भावाग्रहणे न तथ्यस्वात्मिष्यते परैः, एवं नानुमानमर्थाभावे मानं, कुतः ? इत्याह—'तथाभूततल्लिङ्गानुपल्लिंगत' अर्थाभावप्रतिबद्धसाधुलिङ्गादर्शनात् ॥१७६॥ पराभिप्रायमभिधातुकाम आह—'उपलब्धी'त्यादि, उपलब्धिलक्षणप्राप्तस्यानुपलब्धा समर्थः परनीत्या यश्चोपलभ्यते तदभावानुपलब्धिरेव—अदर्शनरूपा 'तन्मानः' अर्थाभावोऽवसीयत इति ॥१७७॥ अत्रोत्तरमभिधित्सुराह—'उपलब्धी'त्यादि, उपलब्धिलक्षणप्राप्तिरिह परेषां स्वमते तद्धेत्वन्तराणाम्, ( एषां—प्रत्यक्षेणा च

रूपोपलम्भ(न्ध)स्यार्थस्य 'असिद्धिः' अनुपलब्धिः कथं भवेद् ?, उपलम्भ-
तत्स्वभावत्वे-उपलब्धिलक्षणप्राप्तत्वे तस्य ) रूपोपलम्भ(न्ध)स्यार्थस्य 'असिद्धिः' अनुपलब्धिः कथं भवेद् ?, उपलम्भ-
जननस्वभावे हेतुसाकल्यविरोधात् ॥ ३७८ ॥ अत्रैवाक्षेपपरिहारावाह-'सहार्थेने'त्यादिना—'सहार्थेन' भवत्परिकल्पि-
तेन 'तज्जननस्वभावानि' अर्थोपलम्भजननस्वभावानि प्रत्ययान्तराणि, यदाह न्यायवादी-"स्वभावविशेषश्च यः
स्वभावस्तत्शून्येपूपलम्भप्रत्ययेषु सत्प्रत्यक्ष एव भवती"ति चेत्, यद्ययमभिप्रायः, अत्रोत्तरं-ननु 'जनयन्त्येव सत्येव'-
मिति यद्यर्थेन सह तज्जननस्वभावानि ततोऽर्थव्यतिरेकेण तदनुपपत्तेस्तद्रूपत्वाज्जनयन्त्येवेति सूक्ष्मधिया भावनीयम्,
'अन्यथाऽतत्स्वभावता' यद्येवं नेष्यते न तर्हि सहार्थेन तज्जननस्वभावानि, तमन्तरेणैव तेषां भावादिति ॥ ३७९ ॥
अत्रैव विशेषमाह-'योग्यता'मित्यादिना—योग्यतामधिकृत्याथ तेषां प्रत्ययान्तराणां 'तत्स्वभावत्वकल्पना' जननस्व-
भावत्वकल्पना, यद्यर्थो भवति जनयति तेन सह तदुपलम्भं, नान्यदा, अत्रोत्तरं-हन्तैवमपि-योग्यतासमाश्रयणेऽपि
सिद्धोऽर्थः, सामान्येन, कुतः ? इत्याह—'कदाचित्' यस्मिन् कस्मिंश्चित्काले उपलब्धेः कारणात् ॥ ३८० ॥ एतदेव सम-
र्थयति—'अन्यथे'त्यादिना—'अन्यथा' यद्येवं कदाचित्कार्यो नेष्यते ततो योग्यता 'तेषां' प्रत्ययान्तराणां कथं युक्त्यो-
पपद्यते ?, कार्यगम्यैव सा, एतदेव द्रढयति-'न लोकेऽश्वमाषादेः' काङ्कडुकाकाशादीनां सिद्धा 'पक्त्यादियोग्यता'
पक्तिमूर्त्तत्वयोग्यता, आकालं तथाविधसहकार्यभावात् ॥ ३८१ ॥ अधिकृतशेषमाह-'पराभिप्राये'त्यादिना—'पराभि-
प्रायतः' बाह्यार्थवाद्यभिप्रायेणैतदेवं चेद् उच्यते यदुतोपलब्धिलक्षणप्राप्तोऽर्थो नोपलभ्यत इति, अत्रोत्तरम्-'न' नैत-
देवं, 'यत्' यस्मादुपलब्धिलक्षणप्राप्तोऽर्थः 'तस्य' परस्योपलभ्यत एवेति ॥ ३८२ ॥ अतत्स्वभावत्वपक्षमाह-'अते'त्या-

विना—'असद्ग्रहणभावैश्च' अथाबाह्यार्थग्रहणस्वभावैश्च प्रत्ययान्तरैः यदि नाम न गृह्यते—बाह्यार्थग्रहणस्वभावविज्ञानं जन्यते, तत एतावता कारणेनासत्त्वं न 'तस्य' बाह्यार्थस्य, 'अतिप्रसङ्गत' पीतासंवेदनस्यस्वभावेन तत्संवेदने पीत संवेदनाभावप्रसङ्गात् ॥ १८३ ॥ पराभिप्रायेण मानमाह—'विज्ञान'मित्यादिना—विज्ञानं यत्स्वसंवेद्य, तथाऽनुभूतेः, ननु अर्थः स्वसंवेद्यः, कस्मादित्याह—'युक्ति(क्त्य)योगतः' समुदायासिद्धेः, अतः 'तद्वेदने' विज्ञानानुभवे 'तस्य' अर्थस्य ग्रहणं नोपपद्यते, न्यायतः ॥ १८४ ॥ एतदेव निगमयति—'एष चे'त्यादिना—एवं चाग्रहणादेव कारणात् तदभावोऽवसीयते, अर्थाभावः, यत एवमतः किमुच्यते—मानमर्थाभावे न विद्यते, विज्ञानस्वसंवेदनस्यैव मानत्वादित्यभिप्रायः ॥ १८५ ॥ सिद्धान्तवादिमतम्—'अर्थग्रहणे'त्यादि, 'अर्थग्रहणरूप' बाह्यार्थपरिच्छेदात्मक 'यत्' यस्मात् 'तत्' तस्माद्विज्ञानं संवेद्यमिष्यते, विच्छिन्नार्थग्रहणरूपतयाऽनुभूतेः, 'तद्वेदने' एवंभूतविज्ञानानुभवे ग्रहः 'तस्य' अर्थस्य, 'तत' तस्मात् किं नोपपद्यते?, अधिकृतवेदनस्यैवार्थमन्तरेणायोगात् ॥ १८६ ॥ एतदेव भावयन्नाह—'घटादी'त्यादि, घटादिज्ञान मित्यादि 'सचिन्ते' ज्ञानमात्रस्यान्यमुखस्यावेदनात् 'तत्प्रवृत्ति' घटादावेव प्रवृत्तेः, भासे', घटादेरेव 'अर्थक्रियायो गात्' जलाद्यानयनादिसिद्धेः, 'स्मृते' गृहीतकस्य 'कौतुकभावतः' तत्रैव कौतुकयोगात् ॥१८७॥ विपक्षे दोषमभिधातु माह—'ज्ञानमात्र' इत्यादिना—ज्ञानमात्रे त्वभ्युपगम्यमाने विज्ञानं—ज्ञानमेव घटादि इत्यदो भवेत्—एतत्स्यात्, परिच्छे- द्यान्तराभावात्, ततः किमित्याह—प्रवृत्त्यादि ततो न स्यात्, अनन्तरोदित, किं भूतमित्याह—प्रसिद्धं लोकशास्त्रयोः, नियमतस्तथाविधविज्ञानोदयो न ॥ १८८ ॥ दोषान्तरमभिधित्सुराह—'तदन्ये'त्यादि, तदन्यग्रहणे च 'अस्य' ज्ञानस्या-

अर्थे 'अनिबन्धनः' अनिमित्तः । कथमित्याह—'ज्ञानान्तरेऽपि' सन्तानान्तरवृत्तिनि
भ्युपगम्यमाने 'प्रद्वेषः' मत्सरः अर्थे 'अनिबन्धनः' अनिमित्तः । ३८९ ॥ उपन्यस्तदोषतुल्यतामुपदर्शयन्नाह—'युक्त्य-
सदृशं तदसंवेदनादि, विज्ञानान्तरासंवेदनात्तत्सत्तादि यस्मात् ॥ ३८९ ॥ उपन्यस्तदोषतुल्यतामुपदर्शयन्नाह—'युक्त्य-
योग' इत्यादि, युक्त्ययोगश्च योऽर्थस्य परैर्महता प्रपञ्चेन गीयते 'जातिवादतः' अनुभवविरुद्धवादेन 'ग्राह्यादिभावद्वा-
रेण' वक्ष्यमाणलक्षणेन ज्ञानवादेऽप्यसौ समः, समता तु ज्ञानजातिवादमात्रख्यापनादिति ॥ ३९० ॥ समतामभिधातु-
माह—'नैकान्ते'त्यादि, ज्ञानं हि ग्राह्यस्वभावं ग्राहकस्वभावम् उभयस्वभावमनुभयस्वभावं वा स्यादिति, अत्राह—'नकौ-
न्तग्राह्यभावं तत्' न सर्वथा ग्राह्यत्वभावं ज्ञानं, कुतः? इत्याह—'ग्राहकाभावतो भुवि' पृथिव्यामपि ग्राहकस्वभाव-
स्याभावात्, 'ग्राहकैकान्तभावं तु' ग्राहकैकत्वमित्यर्थः, ग्राह्याभावादसङ्गतम्, एवं हि न पृथिव्यामपि ग्राह्यस्वभावं
किञ्चित्, सम्बन्धिशब्दौ चैताविति भावनात् ॥ ३९१ ॥ तृतीयं पक्षमधिकृत्याह—'विरोधा'दित्यादि, विरोधात् 'नोभ-
याकारं' नोभयस्वभावम्, अन्यथा तदसद्भवेत्, यद्यनुभयस्वभावं, कुतः? इत्याह—निःस्वभावत्वतः कारणात् 'तस्य'
विज्ञानस्य, सत्ता 'एवम्' उक्तेन प्रकारेण युज्यते कथं?, नैवेत्यर्थः ॥ ३९२ ॥ पराभिप्रायमाह—'प्रकाशे'त्यादिना—
'प्रकाशैकस्वभावं हि' गगनतलवृत्त्यालोककल्पं विज्ञानं 'तत्त्वतः' परमार्थतः 'मतम्' इष्टम् 'अकर्मकं' कर्मरहितं, तथा
चैतज्जातं स्वयमेव प्रकाशते, किं प्रकाशते?, विज्ञानं प्रकाशत इति, कर्मणोऽश्रवणात् ॥ ३९३ ॥ अत्रैव दृष्टान्तमाह—
'यथे'त्यादिना—यथाऽऽस्ते शेत इत्यादौ प्रयोगे विना कर्म स एव हि—कर्त्ता देवदत्तादिः तथोच्यते आस्ते शेते, न तु
यथा कटं करोति, जगत्यस्मिन्नेव यथैव, तत्र तथा ज्ञानमपीष्यतां, अकर्मकं प्रकाशत इति ॥ ३९४ ॥ अत्रोत्तरमाह—

'उच्यते' इत्यादिना—उच्यते सांप्रतम्'-एतदभिनिवेशत्यागेन स्वयमेव 'विचिन्त्यताम्' आलोच्यतां, प्रमाणमायतः 'तत्र' सविशिष्टप्रकाशकमात्रे विज्ञाने यथेतदुपपद्यते ॥ १९५ ॥ एवं च तत्स्थापनं यथा येनोपपद्यते तथाऽऽह-'एव ने'त्यादिना—'एष' गगनतलव्यवस्थितोऽनन्तगतापां न 'यत्' यस्मात्तदात्मानमपि प्रकाशयति, प्रकाशैकमात्रस्वभावत्वा दिति, 'अत' अस्मात्कारणात् तदित्थं-प्रकाशमात्रम् 'अन्यथा ने'ति सकर्मकमिति न विज्ञानव्यवस्थितिः, तस्य तद् ग्राहकस्वभावत्वादिति ॥ १९६ ॥ एतदेव समर्थयति-'व्यवस्थिता' वित्यादिना—व्यवस्थितौ च विज्ञानात् तत्तथातायाः 'तत्' विज्ञानं व्यवस्थापक 'तस्य' व्यवस्थाप्यज्ञानस्य 'तथाभावप्रकाशकम्' अकर्मकप्रकाशमात्रद्योतकं ध्रुव यतस्ततो ऽकर्मकत्वम् 'अस्य' व्यवस्थापकसन्तानस्य कथं भवेत्?, नैव, सति चास्मिन् सर्वमित्थं स्यादित्यभिप्रायः ॥ १९७ ॥ पराभिप्रायमाशङ्क्य परिहरन्नाह—( व्यवस्थापक-व्यवस्थाकारि विज्ञानमस्य परपरिकल्पितस्यार्थस्य एव यत् भ्रान्तं चैतद्गु भावतः, अकर्मकप्रकाशने किमित्याह-तथेत्यभ्रान्तं, अत्रापि ) परिहारविज्ञाने ननु मानं न विद्यते, अस्यापि सविषयत्वेन भ्रान्तत्वादित्यर्थः ॥ १९८ ॥ यदि नामैवं ततः किमित्याह—'भ्रान्ता'वित्यादि, भ्रान्ताभासात्परिहारविज्ञानाद् अभ्रा-न्तिकमा न साध्वी-न युक्तियुक्ता व्यवस्थिति', व्यवस्थापकस्येदं भ्रान्तमित्यादिरूपा, पराभिप्रायमाह-दृष्टा तैमिरिका दीनाभावादिति चेत्, तैमिरिकादयो हि भ्रान्तिज्ञानवन्तोऽपि नैव द्विचन्द्रादिविज्ञानेनाक्षदोषादौ व्यवस्थितिं कुर्वन्तीति च, अत्रोत्तरं-नैतत् 'नैतदेवम्' ॥ १९९ ॥ कथमित्याह-'मात्रादी'त्यादि, 'अनक्षादिदोषविज्ञान' तिमिरादिगोचरं 'तत्र न्यभ्रान्तिवत्' द्विचन्द्रादिभ्रान्तिवत् यतो भ्रान्तं, किमत्रभ्रान्तमेव, 'तस्य तथाभावे' इत्यक्षादिदोषविज्ञानस्य

भ्रान्तत्वे, किमित्याह–'भ्रान्तस्य' द्विचन्द्रादिज्ञानस्याभ्रान्तता भवेत्, निर्दोषहेतुत्वादित्यर्थः ॥ ४०० ॥ दोषान्तरम-भिधातुमाह—'न चे'त्यादि, न च प्रकाशमात्रं तु सर्वथैकस्वभावमेव लोके क्वचित् 'अकर्मकम्' अनवलम्बनं दीपादौ युज्यते न्यायात्, प्रकाशकत्वेनोपलब्धेः, अतश्चैतद् अपार्थकं, विज्ञानाकर्म्मकत्वकल्पनमिति ॥ ४०१ ॥ दृष्टान्तमधिकृत्याह—'दृष्टान्ते'त्यादि, दृष्टान्तमात्रतः सिद्धिः, आस्ते शेते इति परिभाषिताद् अस्मात् अत्यन्तविधर्मिणः—वोधात्मनो, न च 'साध्यस्य' विज्ञानस्य, तद्धि विज्ञानत्वादेव, किञ्चिद्विज्ञानं नान्यथा, 'यत्' यस्मादेवं तेन कारणेन शब्दमात्रमसावपि दृष्टान्तो, न तु लक्षणयुक्त इति ॥ ४०२ ॥ अत्रैव प्रधानदोषमाह–'किंचे'त्यादिना—किञ्च 'विज्ञानमात्रत्वे', तदन्यविकल एव, न संसारापवर्गयोः विशेषो विद्यते कश्चित्, तन्मात्रस्योभयत्राविशेषात्, तथा चैतद्वृथोदितं भवतामागम इति ॥ ४०३ ॥ यदुदितं तदाह–'चित्त'मित्यादिना—'चित्तमेव हि' विज्ञानमेव संसारः, किंभूतं चित्तमित्याह–रागादिक्लेशवासितं, युक्तं, तदेव चित्तं रागादिक्लेशैर्विनिर्मुक्तं सत् भवान्त इति कथ्यते, अपवर्ग इत्यर्थः ॥ ४०४ ॥ यथैतद्वृथा तथाऽऽह–'रागादी'त्यादिना—रागादिक्लेशवर्गो यत्तस्मान्न विज्ञानात्पृथग् मतः, किन्तु वोधमात्रं, तत एव एकान्तेनैकस्वभावे वोधात्मना 'तस्मिन्' विज्ञाने किं केन वासितं ?, वासकाभावात् ॥ ४०५ ॥ पराभिप्रायमाशङ्क्य परिहरति–'क्लिष्ट'मित्यादिना—'क्लिष्टं' मलिनं विज्ञानमेव 'असौ' रागादिक्लेशवर्ग इति, आह–क्लिष्टता 'तस्य' विज्ञानस्य 'यद्वशात्' यत्सामर्थ्येन, नील्यादिवत्पटादिक्लिष्टताकारि 'असौ' रागादिक्लेशवर्गः 'वस्तु' अपरिकल्पितः 'तद्वद्वेव' विज्ञानात्मकवोधवदेव प्रसज्यते, उभयजत्वात् क्लिष्टताया इत्यभिप्रायः ॥ ४०६ ॥ प्रसङ्गदोषमाह–'मुक्तौ चे'त्यादिना—मुक्तौ

च 'तस्य' रागादिक्लेशवर्गस्य 'भेदेन' चेदेव (नाशेन) 'भावः स्यात्' सत्ता भवेत् पटशुद्धिवत्, यथा पटशुद्धौ नीलयादेः, यद एवं ततो 'याथार्थ्यतासिद्धि' भावार्थताऽवस्थितिरभिष्टा संप्रसज्यति, विज्ञानमात्रवादिन इति ॥ ४०७ ॥ पराभिप्रायमाशङ्क्य परिहरति-'प्रकृत्ये'त्यादिना—'प्रकृत्यैव' स्वभावेनैव 'तथाभूतं' मलिनं 'तदेव' चित्तं क्लिष्टता न ततोऽन्यत्कारीति चेत्, अत्रोत्तरं-'तदन्यूनातिरिक्तत्वे' [ चित्तमात्रा ] चित्तमात्रभावे सति केन मुक्तिस्तस्य चेतसो ?, विचिन्त्यतामेतदिति ॥ ४०८ ॥ पराभिप्रायमाह-'असत्यपी'त्यादिना—असत्यपि च 'बाह्ये' वस्तुनि ग्राह्यग्राहकलक्षणा एवद्रूपा द्विचन्द्रभ्रान्तिवद्भ्रान्तिरनुभवसिद्धा इयं नः—इयमेव भ्रान्तिरस्माकं क्लिष्टतेति चेत् ॥ ४०९ ॥ अत्रोत्तरमाह-'अस्त्वे'त्यादिना—'अस्त्वेतत्' भवत्वेतत् एव, किंतु अत्रापि 'तद्धेतुभिन्नहेत्वन्तरोद्भवा' एकचन्द्रबोधकारणाद्व्यतिरिक्ततिमिरादिकारणान्तरोद्भवा यस्मादियं द्विचन्द्रादिभ्रान्तिर्भवेत्, एतदेव स्पष्टयति-तिमिराभावे नेन्दुद्वयदर्शनं, मक्षीकादिदर्शनहेतुकामलाद्युपलक्षणमेतत्, इत्थं यथा तिमिरादि एकचन्द्रादिबोधहेतुभ्योऽन्यदधिकं, तथा बोधमात्रादधिकस्तत्क्लिष्टताहेतुरित्यैदम्पर्यम् ॥ ४१० ॥ एतत्प्रकटनायैवाह—'न चासदि'त्यादि, न चासदेव-तुच्छं 'तद्धेतु' क्लिष्टताहेतुः, 'बोधमात्रं' भव्यानन्तुविद्धं न चापि तत्, हेतुः, कुत इत्याह-सदैव क्लिष्टतापत्तेः, बोधमात्राविशेषादिति, मुक्तिर्न युज्यते परमार्थेन ॥ ४११ ॥ ततः किमित्याह—'मुक्त्य'त्यादि, मुक्त्यभावे च सति सर्वेष तपस्विनां ननु चिन्ता 'निरर्थिका' निष्प्रयोजना, स्यादेव बोधमात्रभावे सदैव मुक्तिरित्यत्राह-भावेऽपि 'सर्वदा' सदा 'तस्याः' मुक्तेः चिन्ता निरर्थिकैवेति सम्यगेतद्विचिन्त्यतां, प्रधानफलत्वादिति ॥ ४१२ ॥ उपसंहरन्नाह—'विज्ञाने'-

'प्राज्ञस्य' पुंसः अभिनिवेशो न तस्मात्कारणा-

त्यादि, विज्ञानमात्रवादो 'यत्' यस्मात् नेत्थमुक्तन्यायात् युक्त्योपपद्यते,

दत्रापि युज्यते विज्ञानवादे ॥ ४१३ ॥ अतिदिष्टाभिधित्सयाऽऽह—

यच्चोक्तं पूर्वमत्रैव, क्षणिकत्वप्रसाधकम् । नाशहेतोरयोगादि, तदिदानीं परीक्ष्यते ॥ ४१४ ॥

हेतोः स्यान्नश्वरो भावोऽनश्वरो वा विकल्प्य यत् । नाशहेतोरयोगित्वं, उच्यते तन्न युक्तिमत् ॥४१५॥

हेतुं प्रतीत्य यदसौ, तथा नश्वर इष्यते । यथैव भवतो हेतुर्विशिष्टफलसाधकः ॥ ४१६ ॥

तथास्वभाव एवासौ, स्वहेतोरेव जायते । सहकारिणमासाद्य, यस्तथाविधकार्यकृत् ॥ ४१७ ॥

न पुनः क्रियते किञ्चित्तेनास्य सहकारिणा । समानकालभावित्वात्तथा चोक्तमिदं तथा(व) ॥ ४१८ ॥

उपकारी विरोधी च, सहकारी च यो मतः । प्रबन्धापेक्षया सर्वो, नैककाले कथञ्चन ॥ ४१९ ॥

सहकारिकृतो हेतोर्विशेषो नास्ति यद्यपि । फलस्य तु विशेषोऽस्ति, तत्कृतातिशयासितः ॥ ४२० ॥

न चास्यातत्स्वभावत्वे, स फलस्यापि युज्यते । सभागक्षणजन्मात्तेस्तथाविधतदन्यवत् ॥ ४२१ ॥

अस्थानपक्षपातश्च, हेतोरनुपकारिणि । अपेक्षायां नियुङ्क्ते यत्कार्यमेतद्वृथोदितम् ॥ ४२२ ॥

यस्मात्तस्याप्यदस्तुल्यं, विशिष्टफलसाधकम् । भावहेतुं समाश्रित्य, ननु न्यायान्निदर्शितम् ॥ ४२३ ॥

'यथोक्त'मित्यादि, यथोक्त पूर्वम् अत्रैव वार्त्ताधिकारे क्षणिकत्वप्रसाधन, किं तत्? इत्याह—नाशहेतोरयोगादि, पूर्वपक्षवादिना, तदिदानीं 'परीक्ष्यते' विचार्यते ॥ ४१४ ॥ परीक्षयन्नाह—'हेतो'रित्यादि, 'हेतो' स्वकारणात् स्यात् 'नश्वरो भावो' नाशशीलः 'अनश्वरो वा' अनाशशीलो वा विकल्प्य यत्—यदि नश्वरः किं नाशहेतुना?, स्वत एव नाशात्, अथानश्वरस्तथाऽपि किं?, ततोऽप्यनाशादिति 'नाशहेतो' मुद्गरादेरयोगित्वमुच्यते, नाशहेतुत्वेन, तत् 'न युक्तिमत्' न घटमानकम् ॥ ४१५ ॥ कथमित्याह—'हेतु'मित्यादि, हेतुं प्रतीत्य, मुद्गरादि, यत् 'असौ' भावस्तथा नश्वरः, प्रायोगिकादिनाशापेक्षया, इष्यते, तत्र हेतोरेव, निदर्शनमाह—यथैव 'भवत' बीजस्य 'हेतु' घटादिः 'विशिष्टफलसाधकः' कपालादिसाधकः ॥४१६॥ एतदेव साधयन्नाह—'तथे'त्यादि, तथास्वभाव एव 'असौ' हेतुः घटादिः स्वहेतोरेव सकाशाज्जायते, कीदृशः? इत्याह—सहकारिणमासाद्य यः मुद्गरादिं तथाविधकार्यकृत्, विजातीयकपालादिकार्यकृदित्यर्थः ॥ ४१७ ॥ उपचयमभिधित्सुराह—'न पुन'रित्यादि, न पुनः 'क्रियते' निर्वर्त्यते किञ्चिदतिशयाधानं 'तेन' मुद्गरादिना 'अस्य' घटादेः सहकारिणेति, कुतः? इत्याह—समानकालभावित्वात्, मुद्गरादेः, तथा चोक्तमिदं तथ स्वभावे ॥ ४१८ ॥ यदुत—'उपकारी'त्यादि, 'उपकारी' क्षीरादिर्जलादेः 'विरोधी' नकुलादिः सर्पादेः 'सहकारी' मुद्गरादिः कपालादेः यो 'मत' इष्टः स 'प्रबन्धापेक्षया' सन्तानापेक्षया 'सर्व' निरवशेषः नैककाले कथञ्चन, तस्य वाधा एवोपकारादित्वादिति ॥ ४१९ ॥ तथैव चोक्तम्—'सहकारी'त्यादि, 'सहकारिकृत' मुद्गरादिकृतः 'हेतोः' घटादेः विशेषो नास्ति यद्यपि समानकालत्वेन 'फलस्य तु' कपालादेः विशेषः 'अस्ति' विद्यत एव, 'तत्कृतातिशया

सितः' सहकारिकृतातिशयासेः ॥ ४२० ॥ इदं चोक्तं तस्य यथोक्तस्वभावातिरेकेण नोपपद्यते इत्याह—'न चे'त्यादि, न
च 'अस्य' हेतोर्घटादेः 'अतत्स्वभावत्वे' मुद्गराद्यवाप्य कपालादिजननास्वभावत्वे 'सः' विशेषः फलस्यापि युज्यते
कालादेः । कुत इत्याह–'सभागक्षणजन्मासेः' अतत्स्वभावत्वे घटादिक्षणोत्पत्तिप्रसङ्गात्, तथाविधतदन्यवत्, घटा-
दिजननस्वभावाद्धटादिवदित्यर्थः ॥ ४२१ ॥ एवं च परिहारान्तरमपि वृथोदितमिति दर्शयन्नाह–'अस्थाने'त्यादिना—
अस्थानपक्षपातश्च अयं किल, कस्येत्याह–'हेतोः' घटादिजनकस्य, किंभूते? इत्याह–'अनुपकारिणि' मुद्गरादौ, अपेक्षायां
नियुङ्क्ते 'यत्कार्यं' घटादि, एतद् यथोक्तदूषणपरिहाराय वृथोदितं परेण शुभगुप्तादिना ॥ ४२२ ॥ कथमित्याह—
'यस्मादि'त्यादि, यस्मात्तस्यापि परस्यैतत् तुल्यं अस्थानपक्षपातचोदनं 'विशिष्टफलसाधकं' कपालादिजनकं
भावहेतुं समाश्रित्य विशिष्टघटादिलक्षणं, ननु न्यायान्निदर्शितमेतदनन्तरमेव, न च तत्र जननस्वभावता विकृतेत्यदोषः,
इतरत्रापि स्वनिवृत्तिस्वभावतयाऽङ्गीकरणादिति ॥ ४२३ ॥ एवं चायुक्तमेव, अन्यदप्यत्र दूषणमित्याह—

नाश्यमाश्रित्य नाशस्य, क्रियते यद् विचक्षणैः ॥ ४२४ ॥
एवं च व्यर्थमेवेह, व्यतिरिक्तादिचिन्तनम् । व्यापाद्यते सदा यस्मान्न कश्चित्केनचित्क्वचित् ॥ ४२५ ॥
किञ्च निर्हेतुके नाशे, हिंसकत्वं न युज्यते । हिंसकस्तन्न सन्तानसमुत्पत्तेरसम्भवात् ॥ ४२६ ॥
कारणत्वात्स सन्तानविशेषप्रभवस्य चेत् । न स्तस्तदधर्मत्वाच्च, हेतुस्तत्प्रभवे कुतः ? ॥ ४२७ ॥
सांवृतत्वाक्षयोत्पादौ, सन्तानस्य खपुष्पवत् ।

विसभागक्षणस्याथ, जनको हिंसको न तत् । स्वतोऽपि तस्य तत्प्राप्तेर्जनकत्वाविशेषत ॥ ४२८ ॥
हन्म्येनमिति संक्लेशाद्धिंसकश्चेत्प्रकल्प्यते । नैव स्वप्नीतितो यस्मादयमेव न युज्यते ॥ ४२९ ॥
सक्लेशो यद्गुणोत्पाद, स चाक्लिष्टात् न केवलात् । न चान्यसचिवस्यापि, तस्यानतिशयात्तत ॥४३०॥
तं प्राप्य तत्स्वभावत्वात्तत स इति चेन्ननु । नाशहेतुमवाप्यैव, नाशपक्षेऽपि न क्षति ॥ ४३१ ॥
अन्ये तु जन्यमाश्रित्य, सत्स्वभावाद्यपेक्षया । एवमाहुरहेतुत्व, जनकस्यापि सर्वथा ॥ ४३२ ॥
न सत्स्वभावजनकस्तद्वैफल्यप्रसङ्गत । जन्मायोगादिदोषाच्च, नेतरस्यापि युज्यते ॥ ४३३ ॥
न चोभयादिभावस्य, विरोधासंभवादित । स्वनिवृत्त्यादिभावादौ, कार्याभावादितोऽपरे ॥ ४३४ ॥
न चाध्यक्षविरुद्धत्व, जनकत्वस्य मानतः । असिद्धेरत्र नीत्या तद्व्यवहारनिषेधत ॥ ४३५ ॥
मानाभावे परेणापि, व्यवहारो निषिध्यते । सज्ज्ञानशब्दविषयस्तद्वदत्रापि दृश्यताम् ॥ ४३६ ॥

'एव चे'त्यादि, एवं च व्यर्थमेव 'इह' नाशविचारे व्यतिरिक्ताविचिन्तनं 'नाश्य' घटादिभावस्य नाशस्य क्रियते यद्विचक्षणै:, यथा नाशो नाश्याद्व्यतिरिक्तोऽव्यतिरिक्तो वा?, व्यतिरेके तस्येत्ययोग:, अव्यतिरेके भाव एव स:, स च स्वहेतोरेवेत्यादि, व्यर्थता च भावस्यैव स्वहेतो: तथास्वभावस्यैव भावात् ॥ ४२४ ॥ अत्रैव दोषान्तरमाह–'किञ्चे'त्या

दिना—किञ्च-निर्हेतुके नाशे सिद्धेऽपि हिंसकत्वं न युज्यते कस्यचित्, कथमित्याह—व्यापाद्यते सदा यस्मान्निर्हेतुकनाश-
पक्षे, न कश्चित् केनचित् क्वचिदिति ॥ ४२५ ॥ पराभिप्रायमाशङ्क्य परिहरति—'कारणे'त्यादिना—कारणत्वात् 'सः'
हिंसकः 'सन्तानविशेषप्रभवस्य' विसभागसन्तानोत्पादस्य यदि मन्यसे हिंसक इति, अत्रोत्तरं—तन्न, सन्तानसमुत्पत्ते-
रसम्भवात् ॥ ४२६ ॥ असम्भवमेवाह—'सांवृत्ते'त्यादिना—'सांवृत्तत्वात्' अपरमार्थसत्त्वाद् व्ययोत्पादौ सन्तानस्य
खपुष्पवत् न स्तः—न विद्येते, 'तदधर्मत्वाच्च' सन्तानाधर्मत्वाच्चोत्पादस्य हेतुस्तत्प्रभवे कुत इति ॥ ४२७ ॥ भूयोऽपि परा-
भिप्रायमाशङ्क्य परिहरति—'विसभागे'त्यादिना—'विसभागक्षणस्याथ' सूकरक्षणात् शशक्षणादेः जनको हिंसको लुब्ध-
कादिः, इह समाधिः—'न तत्' नैतदेवं, कुतः? इत्याह—स्वतोऽपि 'तस्य' हिंसकस्य शूकरक्षणादेः 'तत्प्राप्तेः' हिंसकत्व-
प्राप्तेः, कथम्?—'जनकत्वाविशेषतः' तस्यापि उपादानतया जनकत्वात् ॥ ४२८ ॥ इहैवाक्षेपपरिहारावेवाह—'हन्म्येन'-
मित्यादि, हन्म्येनमितिसङ्क्लेशात् (हिंसकश्चेत् लुब्धकादिः प्रकल्प्यते तदपि न त्वन्नीतितः) तत् कथमित्याह—विप्रा-
(यस्मात्)संक्लेशो न युज्यत इति ॥४२९॥ एतदेवाह—'संक्लेश'इत्यादिना—सङ्क्लेशो 'यत्' यस्मात् गुणोत्पादः, स चाक्लि-
ष्टादुपादानान्न केवलात्, न च 'अन्यसचिवस्यापि' हिंस्यादिसहकारिणोऽपि, 'तस्य' उपादानस्यानतिशयात् 'ततः'
सहकारिण इति । अनतिशयश्च समानोऽसमानकालकरणायोगात् ॥ ४३० ॥ पराभिप्रायमाशङ्क्य परिहरति—'त'मित्या-
दिना—'तं' हिंसकं प्राप्य ततश्च 'तत्स्वभावत्वात्' संक्लेशजननस्वभावत्वात्तदुपादानस्य ततः सहकारिणः 'सः' सङ्क्लेश
इति चेत्, अत्रोत्तरमाह—ननु 'नाशहेतुं' मुद्गरमवाप्य 'एवं' स्वभावकल्पनायां नाशपक्षेऽपि न क्षतिः, तस्यापि तं प्राप्य

स्वनिवृत्तिस्वभावत्वादिति ॥ ४११ ॥ दोषान्तरमाह—'अन्ये त्वि'त्यादिना—'अन्ये तु' आचार्या। 'जन्य' कार्यमाश्रित्य 'सत्स्वभावाद्यपेक्षया' किं सत्स्वभावः अन्यजनकस्वभावः ? उतासत्स्वभावः अन्यजनकस्वभावः ? अथोभयस्वभावः जन्यजनकस्वभावः ? उताहो अनुभयस्वभावः जन्यजनकस्वभाव इत्येवंभूतया 'एव' नाशवज्जातिविकल्पद्वारेणाहुः 'अहेतुत्वम्' अकारणत्वं जनकस्यापि सर्वथा, न केवलं नाशहेतोरेव ॥ ४१२ ॥ एतदेव स्पष्टयति—'न स'दित्यादिना—'न सत्स्वभाव जनक' इति न सत्स्वभावस्तु जनकस्वभावो–जनकहेतुः, कुतः ? इत्याह–'तद्वैफल्यप्रसङ्गतः' सत्स्वभावस्यैव जन्यस्य तस्य जनकस्य वैफल्यप्रसङ्गात्, सत एवाकरणात्, अनिष्पत्तेः, सदा सत्त्वाविशेषादिति, 'जन्माद्ययोगादिदोषाच्च' कारणात् न 'इतरस्यापि' अ(सत्)स्वभावस्य जन्यस्य युज्यते जनक इति योगः, जनकस्वभाव इत्यर्थः, असतः अयोगात्, अवस्थान्तरानुपपत्तेः, भावेऽपि तुच्छत्वादिति ॥ ४१३ ॥ विकल्पान्तरदोषमाह–'नचे'त्यादिना—'न चोभयादिभावस्ये'त्युभयस्वभावस्यानुभयस्वभावस्य वा, जनक इति वर्तते, कुतः ? इत्याह–'विरोधासम्भवादित' उभयस्वभावजनकत्वे विरोधात्, परस्परविरोधेऽपि स्वमतविरोध एव, अनुभयस्वभावजनकत्वेऽसम्भवादिति तादृशस्यासम्भवस्तथानुपलब्धेरिति। मतान्तरमाह–स्वनिवृत्त्यादिभावाद्वा जनकत्वे कार्याभावादितः कारणात् अपरे आचार्याः, जनकस्याहेतुत्वमाहुरिति वर्तते, एतदुक्तं भवति–स जनकः स्वनिवृत्तिस्वभावः कार्यजननस्वभावः उभयस्वभावोऽनुभयस्वभावो वा ?, यदि स्वनिवृत्तिस्वभावः कुतः कार्यजननमिति कार्याभाव एव, अथ कार्यजननस्वभावः कथं स्वनिवृत्तिः ?, उभयस्वभावत्वे पूर्ववद्विरोधः, अनुभयस्वभावत्वे त्वसम्भवादिति। अथ स्वनिवृत्तिरेव कार्यजननमेव तर्हि जननं कार्यव्यतिरिक्तमिति,

कार्यमेव तच्चेत्सा निवृत्तिरनिवारितोऽन्वयः कार्याभावो वेति सूक्ष्मधिया भावनीयम्, एवं हि हेतुफलभावनिषेधः कृतः स्यात्, स प्रत्यक्षबाधित इति ॥ ४३४ ॥ आशङ्कापोहायाह—'न चाध्यक्षे'त्यादि, न चाध्यक्षविरुद्धत्वमत्र चोदनीयं, 'जनकत्वस्य' प्रस्तुतस्य 'मानतः' मानेनोक्त[त्व]वत् 'असिद्धेः' कारणात्, अत्र प्रक्रमे 'नीत्या'न्यायेन 'तद्व्यवहारनिषेधतः' जनकव्यवहारनिषेधात् ॥ ४३५ ॥ अयं च परेणाप्याश्रित एव न्याय इत्याह–'माने'त्यादिना—मानाभावे क्वचिद्वस्तुनि 'परेणापि' सौगतेन व्यवहारो निषिध्यते प्रधानादौ, किंभूतः ? इत्याह–'सज्ज्ञानशब्दविषयः' सदिति ज्ञानं सदिति च शब्द इत्येवं गोचरः, तद्वद् 'अत्रापि' जनकत्वे दृश्यतां, मानाभावाविशेषात् ॥ ४३६ ॥ युक्त्यन्तरमधिकृत्याह–'अर्थक्रिये'-त्यादिना—

अर्थक्रियासमर्थत्वं, क्षणिके यच्च गीयते । उत्पत्त्यनन्तरं नाशाद्विज्ञेयं तदयुक्तिमत् ॥ ४३७ ॥
अर्थक्रिया यतोऽसौ वा, तदन्या वा ? द्वयी गतिः । तत्त्वे न तत्र सामर्थ्यमन्यतस्तत्समुद्भवात् ॥४३८॥
न स्वसंधारणे न्यायाज्जन्मानन्तरनाशतः । न च नाशोऽपि सद्युक्त्या, तद्धेतोस्तत्समुद्भवात् ॥ ४३९ ॥
अन्यत्वेऽन्यस्य सामर्थ्यमन्यत्रेति न सङ्गतम् । ततोऽन्यभाव एवैतन्नासौ न्याय्यो दलं विना ॥४४०॥
नासत्सत् जायते यस्मादन्यसत्त्वास्थितावपि । तस्यैव तु तथा भावे, नन्वसिद्धोऽन्वयः कथम् ? ॥४४१॥

मूर्तिर्येषां क्रिया सोक्ता, न चासौ युज्यते क्वचित्। कर्तृभोक्तृस्वभावत्वविरोधादिति चिन्त्यताम् ॥४४२॥
न चातीतस्य सामर्थ्यं, तस्यामितिनिदर्शितम्। न चान्यो लौकिक कश्चिच्छब्दार्थोऽत्रेत्ययुक्तिमत् ॥४४३॥

अर्थक्रियासमर्थत्वं क्षणिके वस्तुनि यच्च गीयते परैः–क्षणिकवादिभिः उत्पत्त्यनन्तरं नाशात् कारणाद्विशेषं तदयुक्तिमदिति ॥ ४३७ ॥ अयुक्तिमत्त्वमेवाह–'अर्थक्रिये'त्यादिना—अर्थक्रिया यतः 'असौ वा' पदार्थः 'तदन्या वा' अन(र्था)न्तरभावीति द्वयी गतिः, किं चातः? इत्याह–'तस्य' इति यदि स पदार्थक्रिया, न तत्र सामर्थ्यं तस्य, कुतः? इत्याह–'अन्यत' स्वहेतोः 'तस्सद्भावात्' तस्योत्पादात् ॥ ४३८ ॥ एवं नास्योत्पादे सामर्थ्यं, न चान्यत्रेत्याह–'न स्वसंधारण' इत्यादिना—न स्वसंधारणे न्यायादस्य सामर्थ्यं, कुतः? इत्याह–जन्मानन्तरनाशतः कारणात्, न च नाशेऽपि तद्वस्या सामर्थ्यं, कुतः? इत्याह–तद्धेतोस्तत्समुद्भवात्, स्वहेतोरेव नश्वरोत्पत्तेरिति ॥ ४३९ ॥ तदन्यपक्षे दोषमाह–'अन्यस्य' इत्यादिना—'अन्यस्ये' इति यद्यन्याऽर्थक्रिया न तत्र सामर्थ्यमित्याह–अन्यस्य सामर्थ्यमन्यत्रेति न सङ्गतं, सामर्थ्यस्य सामर्थ्यवतः सकाशादभेदात्, स्यादेतत् 'ततः' पदार्थाद् रिक्तघटादेः 'अन्यभाव एव' पूर्वघटोत्पाद एव 'एतत्' सामर्थ्यं नान्यदित्यत्राह–न 'असौ' अन्यस्य भावः 'न्याय्यः' घटमानकः 'दलं विना' उपादानमन्तरेण ॥ ४४० ॥ एतदेव स्पष्टयति–'नास'दित्यादिना—नासत्सत् जायते यस्मात्, तस्यासत्यभावेनातिप्रसङ्गात्, अन्यसत्त्यस्थितावपि, किन्तु तस्यापि निवृत्ती?, तस्यैव च तु पूर्वक्षणस्य 'तथाभावे' उत्तररूपत्वेन भवने नन्वसिद्धोऽन्वयः कथं?, भावाविच्छेदस्ये

वान्वयत्वात् ॥ ४४१ ॥ सिद्ध एव दोषान्तरमाह–'भूति'रित्यादिना—भूतिः 'येषां' भावानां क्रिया सोक्ता भवता, न चासौ–भूतिर्युज्यते कचिदन्या यतः, कथमित्याह–कर्तृभोक्तृस्वभावत्वविरोधात्, सा हि कर्तृस्वभावा भोक्तृस्वभावा वा?, कर्तृस्वभावत्वे न भोक्तृत्वं, भोक्तृस्वभावत्वे न कर्तृत्वं, न च कर्तृस्वभावत्वमेव भोक्तृत्वम्, अभिन्ननिमित्तत्वे प्राक्कृतापनयनेतरेतरोत्पादयोरभेदप्रसङ्गात्, चरमस्य कर्तृत्वाभावाच्च भावे चरमत्वविरोधादिति चिन्त्यतामेतदिति सूक्ष्मधिया, बुद्ध्या ॥ ४४२ ॥ प्रस्तुतमुपसंहरति–'न चे'त्यादिना—न चातीतस्य वस्तुनः सामर्थ्यं स्वहेतोरव्यतिरिक्तं 'तस्याम्'अर्थक्रियायां द्वितीयक्षणलक्षणायाम्, 'इति' एतत् निदर्शितम्, अन्यस्य सामर्थ्यमन्यत्रेति न सङ्गतमित्यनेन, न चान्यो लौकिकः कश्चिच्छब्दार्थः 'अत्र' अर्थक्रियायां सामर्थ्यमिति वाक्ये, 'इति' एवम् अयुक्तिमदर्थक्रियासमर्थत्वं क्षणिके यद्गीयत इति ॥ ४४३ ॥ परिणामपक्षमधिकृत्याह—

परिणामोऽपि नो हेतुः, क्षणिकत्वप्रसाधने । सर्वदैवान्यथात्वेऽपि, तथाभावोपलब्धितः ॥ ४४४ ॥
नार्थान्तरगमो यस्मात्, सर्वथैव न चागमः । परिणामः प्रमासिद्धः, इष्टश्च खलु पण्डितैः ॥ ४४५ ॥
यच्चेदमुच्यते ब्रूमोऽतादवस्थ्यमनित्यताम् । एतत्तदेव न भवत्यतोऽन्यत्वे ध्रुवोऽन्वयः ॥ ४४६ ॥
तदैव न भवत्येतत्तच्चेन्न भवतीति च । विरुद्धं हन्त किश्चान्यदादिमत्तत्प्रसज्यते ॥ ४४७ ॥
क्षीरनाशश्च दध्येव, यद् दृष्टं गोरसान्वितम् । न तु तैलाद्यतः सिद्धः, परिणामोऽन्वयावहः ॥ ४४८ ॥

नासत् सञ्जायते जातु, सद्वासत्सर्वथैव हि। शक्त्यभावादतिव्याप्ते, सत्त्वमात्रस्वहानित ॥ ४४९ ॥
नित्येतरदतो न्यायात्तथाभावतो हि तत्। प्रतीतिसचिवास्सम्यक्, परिणामेन गम्यते ॥ ४५० ॥

'परिणामे' त्यादि, 'परिणामोऽपि' वक्ष्यमाणः नो हेतुः, क? इत्याह–'क्षणिकत्वप्रसाधने' निरन्वयनाशसाधन इत्यर्थः, कथं न हेतुः? इत्याह–'सर्वदैव' सर्वकालमेवान्यथात्वेऽपि सति कुमारस्थविरादितया 'तथाभावोपलब्धितः' देहमृदादिभावोपलब्धेरिति ॥ ४४४ ॥ इत्थं चैतदङ्गीकर्तव्यमित्याह—'नार्थान्तरे' त्यादि, न अर्थान्तरगमन–सर्वथाऽर्थान्तरगमन 'यस्मात्' कारणात्, 'सर्वथैव न चागम' एकान्तेन न चागमनं, परिणाम एवंभूतः 'प्रमासिद्ध' प्रमाणप्रतिष्ठित', इष्टश्च सद्भु पण्डितैः, 'तद्भावः परिणामो यत् तत्तेन तथा भूयत' इति वचनात् ॥ ४४५ ॥ अत्र परोक्तानित्यतामधिकृत्याह 'य चेद' मित्यादिना,–यच्चेदमुच्यते निरन्वयनश्वरवादिभिः, किमित्याह–भूमोऽतावदवस्थ्यं भावानामनित्यताम्, इष्टसिद्धिरसा कम्, अत्रोत्तरम्–'एतत्' अतावदवस्थ्यं परस्य कीदृगित्याह–'तदेव न भवति' 'न तत्र किञ्चिद्भवति, (न) भवत्येव केवल' मिति वचनात्, 'अत' अभवनात् अन्यत्वेऽतावदवस्थ्यस्य भुवोऽन्वयः, तस्यैव तथाभवनादिति ॥ ४४६ ॥ अत्र चायं दोष इत्याह—'तदेवे' त्यादि, 'तदेव न भवति' तदेवेति नवम(भवन)स्वभाव न भवतीत्यभिदधतः, एतच्चैव भवतीति च विरुद्धं, भवनस्वभावस्याभवनस्यायोगात्, 'हन्ते' त्युपदर्शने, किं चान्यदिति दोषान्तरस्थापने, तथेदम्–भाविमत्प्रसज्यते, अभवनं, तदाऽभवनादित्युक्तमाय च ॥ ४४७ ॥ अत्र प्रस्तुतमेव समर्थयन्नाह–'क्षीरे' त्यादि, 'क्षीरनाशश्च' क्षीरपरिणा

मध्य दध्येव 'यत्' यस्माद्दृष्टं, किंभूतमित्याह–'गोरसान्वितं' सत्स्वरूपानुवेधि, न तु 'तैलादि,' तदत्यन्तभिन्नं, यत एव
मतः सिद्धः परिणामः, किंभूतः? इत्याह–'अन्वयावहः' अन्वयप्रापक इति ॥ ४४८ ॥ एतत्प्रतिबद्धमेवाभिधातुमाह–
'नासदि'त्यादि, न 'असत्' एकान्ततुच्छं 'सज्जायते' अतुच्छं जायते 'जातु' कदाचित्, अत्रोपपत्तिः–शक्त्यभा-
वादतिव्याप्तेरिति, न हि तुच्छस्य विवक्षितातुच्छजनने शक्तिः, तदभाव(वा)विशेषात्, तद्वत्तदन्यभवनापत्तेरित्यर्थः, न वा
सज्जायतेऽसत् सर्वथैव हि, न कदाचित् जायते, अत्राप्युपपत्तिः–सत्स्वभावत्वहानितः, सन् हि सत्स्वभावं नासद्भ-
वितुमर्हति, सत्स्वभावत्वविरोधादित्यभिप्रायः ॥ ४४९ ॥ प्रस्तुतानुसारेणोपसंहरन्नाह—'नित्येतरदि'त्यादि, 'नित्येतरत्'
नित्यानित्यम् 'अतः' असदादेः सदाद्यनापत्तेः 'न्यायात्' सद्विचारेण, 'तत्तथाभावतो हि' तस्यैव तथाभवनेन 'तत्'
वस्तु प्रतीतिसचिवात्सम्यग् न्यायात्, परिणामेन गम्यत इति ॥ ४५० ॥ पक्षान्तरमधिकृत्याह—

अन्ते क्षयेक्षणं चाद्यक्षणक्षयप्रसाधनम्। तस्यैव तत्स्वभावत्वात्, युज्यते न कदाचन ॥ ४५१ ॥
आदौ क्षयस्वभावे च, तत्रान्ते दर्शनं कथम्?। तुल्यापरापरोत्पत्तिविप्रलम्भाद्यथोदितम् ॥ ४५२ ॥
अन्ते क्षयेक्षणादादौ, क्षयोऽदृष्टोऽनुमीयते। सदृशेनावरुद्धत्वात्तद्ग्रहाद्धि तदग्रहः ॥ ४५३ ॥
एतदप्यसदेवेति, सदृशो भिन्न एव यत्। भेदाग्रहे कथं तस्य, तत्स्वभावत्वतो ग्रहः? ॥ ४५४ ॥
तदर्थनियतोऽसौ यद्भेदमन्याग्रहाद्धि तत्। न गृह्णातीति चेत्तुल्यः, सोऽपरेण कुतो गतिः? ॥ ४५५ ॥

तथागतेरभावे च, वचस्तुच्छमिदं ननु । सदृशेनावरुद्धत्वाच्चग्रहाद्धि तदग्रह ॥ ४५६ ॥
भावे चास्या बलादेक्यमनेकग्रहणात्मकम् । अन्वयिज्ञानमेष्टव्य, सर्वं तत्क्षणिकं कुत ? ॥ ४५७ ॥
ज्ञानेन गृह्यते चार्थो, न चापि परदर्शने । तदभावे तु तद्भावात्कदाचिदपि तत्त्वत ॥ ४५८ ॥
ग्रहणेऽपि यदा ज्ञानमपैत्युत्पत्त्यनन्तरम् । तदा तत्तस्य जानाति, क्षणिकत्व कथ ननु ? ॥ ४५९ ॥
तस्यैव तत्स्वभावत्वात्स्वात्मनैव तदुद्भवात् । त(थ)था नीलादि ताद्रूप्यात्तेतन्मिथ्यात्वसंशयात् ॥ ४६० ॥
न चापि स्वानुमानेन, धर्मभेदस्य संभवात् । लिङ्गधर्मातिपाताच्च, तत्स्वभावाद्ययोगतः ॥ ४६१ ॥
नित्यस्यार्थक्रियाऽयोगोऽप्येव युक्त्या न गम्यते । सर्वमेवाविशेषेण, विज्ञान क्षणिक यत ॥ ४६२ ॥
तथा चित्रस्वभावत्वान्न चार्थस्य न युज्यते । अर्थक्रिया ननु न्यायात्क्रमाक्रमविभाविनी ॥ ४६३ ॥

'अ त' इत्यादि, 'अन्ते क्षयेक्षणं च' अन्ते नाशदर्शनं च, किमित्याह—'आद्यक्षणक्षयमसाधनम्' आद्यस्य क्षणस्य नाशसाधनं, यस्मात्तस्य, 'तस्यैव' वस्तुनः 'तत्स्वभावत्वात्' नाशस्वभावत्वात् युज्यते न कदाचन, अतत्स्वभावस्यापत्ते रिति ॥ ४५१ ॥ एतदेव समर्थयन्नाह—'आदा'वित्यादि, 'आदौ' प्रथमक्षण एव 'क्षयस्वभावे च' नाशस्वभावे च 'तत्र' वस्तुनि अन्ते दर्शनं कथ क्षयस्य ? किं नादावेव इति भावः । पराभिप्रायमाह—तुल्यापरापरोत्पत्तिविप्रलम्भात्, अन्ते,

किमुदितमित्याह—'अन्त'इत्यादि, 'अन्ते क्षयेक्षणात्' अन्ते नाशदर्शनात्
नादावेवेति यथोदितं पूर्वसूरिभिः ॥ ४५२ ॥ किमुदितमित्याह—'अन्त'इत्यादि, अनश्वरस्यान्तेऽपि तदयोगात्, अग्रहकारणमाह—'सदृशेनाव-
'आदौ' उत्पत्तिकाले 'क्षयः' नाशः अदृष्टः सन्ननुमीयते, अनश्वरस्यान्तेऽपि तदयोगात्, आद्यक्षयाग्रह इत्यर्थः ॥ ४५३ ॥ इहोत्तरमभिधातु-
रुद्धत्वात्' तत्सदृशस्यैवोत्पत्तेः 'तद्ग्रहात्' [वि]सदृशग्रहादेव 'तदग्रहः' आद्यक्षयाग्रह इत्यर्थः ॥ ४५३ ॥ इहोत्तरमभिधातु-
माह—'एतदि'त्यादि, एतदपि यदुक्तं परेण 'असदेवेति' अप्रभवमेव, कथमित्याह-सदृशो भिन्न एव यत् सः, नाभिन्नो-
ऽपि, ततः किमित्याह—भेदाग्रहे सति कथं 'तस्य' सदृशस्य 'तत्स्वभावत्वतः' भिन्नस्वभावत्वादेव 'ग्रहः' अवगमः, न
हि नीलत्वे गृहीते तत्स्वभावस्याग्रहः ॥ ४५४ ॥ पराभिप्रायमाह—'तदर्थे' त्यादिना—'तदर्थनियतः' विवक्षितैकक्षणार्थ-
विषय इत्यर्थः, असौ' ग्रहः परिच्छेदो 'यत्' यस्मात् 'भेदं' नानातालक्षणम् 'अन्याग्रहाद्धि' अन्याग्रहादेव' तत्
तस्मान्न गृह्णाति, तत्त्वतस्त्वस्त्येव स इति चेदत्रोत्तरं—'तुल्यः' सदृशो गृह्यमाणः 'अपरेण' अतीतेनेति कुतो 'गतिः'
परिच्छित्तिः?, नैवेत्यर्थः ॥ ४५५ ॥ अगतौ दोषमाह—'तथे'त्यादिना—'तथागतेः' भेदपरिच्छित्तेः, अभावे च सति किमि-
त्याह—'वचस्तुच्छं' असारमिदं ननु, यदुत सदृशेनावरुद्धत्वात्तद्ग्रहाद्धि तदग्रहः इति, आकालमेव सादृश्यागतेरिति
भावः ॥ ४५६ ॥ दोषान्तरमाह—'भाव'इत्यादिना—भावे च 'अस्याः' गतेर्बलादेकं कथञ्चित् 'अनेकग्रहणात्मकं' पूर्वा-
परग्रहणरूपम् अन्वयि ज्ञानमेष्टव्यम्, अन्यथा तथागत्यभावात्, यत एवं सर्वं क्षणिकं कुतः?, यथोक्तज्ञानस्यैवान्वयिक-
त्वात् ॥ ४५७ ॥ दोषान्तरमाह—'ज्ञाने'त्यादिना—ज्ञानेन गृह्यते च 'अर्थः' रूपादिलक्षणः, न चापि 'परदर्शने' बौद्धमते
स्वनीत्या कदाचिदपि सर्वकालमेव 'तत्त्वतः' परमार्थत इति योगः, कुतः? इत्याह—'तदभावे तु' अर्थाभाव एव तद्भावात्

ज्ञानस्य, हेतुफलभावेन ॥ ४५८ ॥ अभ्युपगम्य दोषान्तरमाह—'ग्रहणेऽपी'त्यादिना—ग्रहणेऽप्यर्थस्य यदा ज्ञानमपैति—वि-नश्यत्युत्पत्त्यनन्तरं तदा 'तत्' ज्ञानं 'तस्य' अर्थस्य जानाति 'क्षणिकत्वम्' उत्पत्त्यनन्तरापवर्गित्वं कथं ननु?, नैवेत्यर्थः ॥४५९॥ पराभिप्रायमाशङ्क्य परिहरति 'तस्यैवे'त्यादिना—'तस्यैव' अर्थस्य तत्स्वभावत्वात् 'स्वात्मनैव' ज्ञानात्मनैव जानाति क्षणिकत्वं, कुतः?—'तद्रूपत्वात्' क्षणिकस्वभावार्थानुरूपत्वेः, निदर्शनमाह—यथा नीलादि जानाति 'ताद्रूप्यात्' विषय सारूप्यादिति, अत्रोत्तरं—नैतत् यदुक्तं परेण, नीत्यैव, मिथ्यात्वसम्पातात्, क्षणिकत्वबोधे शुक्ले शङ्खे पीतबोधवदेना दिति ॥ ४६० ॥ अनुमानज्ञानस्य नीत्यैवनिराकरोति 'न चापी'त्यादिना—न चापि स्वानुमानेन जानाति क्षणिकत्वं, यथा मद्रूपमनित्यमेवमयमपीति, कुतः इत्याह—'धर्मभेदस्य' चेतनेतररूपस्य सम्भवात्, अतः कथञ्चित्ताद्रूप्येऽपि तथा ताद्रूप्ये न विरोधः, दोषान्तरमाह—'लिङ्गधर्मोतिपाताच्च' स्वानुमानपक्षे तदात्मन एव, कुतः? इत्याह—'तत्स्वभावाद्ययोगात्' तस्यार्थस्य न तज्ज्ञानं स्वभावो, नापि कार्यं, न चाऽन्येन गम्यत इति सम्बन्धस्मरणाद्यभाव इति ॥ ४६१ ॥ दोषान्तरमाह—'नित्यस्ये'त्यादिना—नित्यस्यार्थस्य क्रियाऽयोगोऽपि व्यवहारसाधनाभावोऽप्येवं सति युक्त्या न गम्यते, नित्यस्यैवाज्ञानात्, एतदेवाह—सर्वमेवाविशेषेण विकल्पकमविकल्पकं च विज्ञानं क्षणिकं यतः, ततो न तेनार्थव्यवस्थेत्यभिप्रायः ॥ ४६२ ॥ अक्षणिकस्यार्थक्रियामभिधातुमाह—तथा चित्रस्वभावत्वात् तथा परिणामेन च चार्थस्य न युज्यते, किन्तु युज्यत एव, केत्याह—अर्थक्रियाप्रयोजनं, ननु न्यायात्, किं विशिष्टा? इत्याह—क्रमाक्रमविभाविनी, घटाद्यानयनसुखदुःखज्ञान जननादिरूपा ॥ ४६३ ॥ वार्तान्तरमभिधित्सुराह—

अन्ये त्वभिदधत्येवमेतदास्थानिवृत्तये । क्षणिकं सर्वमेवेति बुद्धेनोक्तं न तत्त्वतः ॥ ४६४ ॥
विज्ञानमात्रमप्येवं, बाह्यसङ्गनिवृत्तये । विनेयान् कांश्चिदाश्रित्य, यद्वा तद्देशनाऽर्हतः ॥ ४६५ ॥
न चैतदपि न न्याय्यं, यतो बुद्धो महामुनिः । सुवैद्यवद्विना कार्यं, द्रव्यासत्यं न भाषते ॥ ४६६ ॥
ब्रुवते शून्यमन्ये तु, सर्वमेव विचक्षणाः । न नित्यं नाप्यनित्यं यद्वस्तु युक्त्योपपद्यते ॥ ४६७ ॥
नित्यमर्थक्रियाऽभावात्क्रमाक्रमविरोधतः । अनित्यमपि चोत्पादव्ययाभावान्न जातुचित् ॥ ४६८ ॥
उत्पादव्ययबुद्धिश्च, भ्रान्ताऽऽनन्दादिकारणम् । कुमार्याः स्वप्नवज्ज्ञेया, पुत्रजन्मादिबुद्धिवत् ॥ ४६९ ॥

'अन्ये त्वि'त्यादि, 'अन्ये तु' वादिनोऽभिदधत्येवं यदुत 'एतदास्थानिवृत्तये' सत्त्वहिताय 'क्षणिकं सर्वमेवे'त्येवं बुद्धेनोक्तं, न 'तत्त्वतः' परमार्थेन ॥ ४६४ ॥ वादान्तरविषयप्रतिपादनायाह–'विज्ञाने'त्यादि, विज्ञानमात्रमप्येवं क्वचित् बाह्यसङ्गनिवृत्तये, सामान्येन, 'विनेयान्' शिष्यान् कांश्चिदाश्रित्य करुणयैव, 'यद्वे'ति विशेषप्रयोजनं तद्देशनाऽर्हतः, स्थितज्ञानान् देशनायोग्यानिति ॥ ४६५ ॥ एतच्च युक्तमेवेत्यभिधातुमाह–'न चैतदि'त्यादि, न चैतदपि न न्याय्यं यदनन्तरमुक्तं, कुतः?–यतो बुद्धो 'महामुनिः' विशिष्टज्ञानवान्, यत एवमतः सुवैद्यवत् आतुरमधिकृत्य विना 'कार्यं'तत्स्वेदापनयनादि, 'द्रव्यासत्यं' वितथमनुपकारकारकं न भाषते, कारणाभावात् ॥ ४६६ ॥ वार्त्तान्तरमधिकृत्याह–'ब्रुवत'इत्यादि,

युक्ते शून्यम् 'अन्ये तु' बौद्धविशेषा एव सर्वमेव वस्तु 'विचक्षणाः' पण्डिताः, कथमित्याह–न नित्यमर्थक्रियाऽयोगात् नाप्यनित्यमुत्पादाद्यभावात् 'यत्' यस्माद् वस्तु 'युक्त्या' विचार्यमाणम् 'उपपद्यते' घटते ॥ ४६७ ॥ एतदेव प्रकटयन्नाह –'नित्य' मित्यादि, नित्यं नोपपद्यते अर्थक्रियाऽयोगात्, अयोगश्च क्रमाक्रमविरोधत इति, अनित्यमपि च परमार्थत उत्पाद व्ययाभावाच्च जातुचिदुपपद्यते ॥४६८॥ कथं तर्ह्युत्पादव्ययबुद्धिः? इत्यत्राह–'उत्पादे'त्यादि, उत्पादव्ययबुद्धिश्च लौकिकी, परमार्थेन भ्रान्ता, न वस्तुमती, निदर्शनमाह–'आनन्दादिकारण' हर्षविषादनिमित्तं 'कुमार्या' अननुभूतसंभोगायाः 'स्वप्नवत्' स्वप्न इव ज्ञेया 'पुत्रजन्मादिबुद्धिवत्' पुत्रजन्ममरणबुद्धिवद्, अनालम्बनः ॥४६९॥ वार्तान्तरमभिधातुमाह—

अत्राप्यभिदधत्यन्ये, किमित्थ तत्त्वसाधनम् । प्रमाण विद्यते किञ्चिदाहोश्चिच्छून्यमेव हि? ॥ ४७० ॥
शून्य चेत्सुस्थितं तत्त्वमस्ति चेच्छून्यता कथम्? । तस्यैव ननु सद्भावादिति सम्यग्विचिन्त्यताम् ॥४७१॥
प्रमाणमन्तरेणापि, स्यादेव तत्त्वसस्थिति । अन्यथा नेति सुव्यक्तमिदमीश्वरचेष्टितम् ॥ ४७२ ॥
उक्त विहाय मान चेच्छून्यताऽन्यस्य वस्तुनः । शून्यत्वे प्रतिपाद्यस्य, ननु व्यर्थ परिश्रम ॥ ४७३ ॥
तस्याप्यशून्यतायां च, प्राश्निकानां यद्युत्वत । प्रभूता शून्यतापत्तिरनिष्टा संप्रसज्यते ॥ ४७४ ॥
यावतामस्ति तन्मानं, प्रतिपाद्यास्तथा च ये । सन्ति ते सर्व एवेति, प्रभूतानामशून्यता ॥ ४७५ ॥

एवं च शून्यवादोऽपि, तद्विनेयानुगुण्यतः । अभिप्रायत इत्युक्तो, लक्ष्यते तत्त्ववेदिना ॥ ४७६ ॥

'अत्रापी'त्यादि, अत्राप्यभिदधति 'अन्ये' वादिनः–किमित्थं 'तत्त्वसाधनं' शून्यत्वसाधनं प्रमाणं विद्यते किञ्चित्
वस्तु सत्? आहोश्विच्छून्यमेव?, न विद्यत इत्यर्थः ॥ ४७० ॥ 'शून्य'मित्यादि, शून्यं 'चेत्' यदि विद्यते प्रमाणं सुस्थितं
तत्त्वम् शून्यत्वम्, प्रामाणिकमित्युपहसति, अस्ति चेदथ प्रमाणमत्र शून्यता कथं?, नैवेत्यभिप्रायः । 'तस्यैव' प्रमाणस्य
नन्वु 'सद्भावात्' विद्यमानत्वात् 'इति' एतत् सम्यग्विचिन्त्यतां, माध्यस्थ्येन ॥ ४७१ ॥ अत्रैवाक्षेपपरिहारावभिधातुमाह—
'प्रमाणे'त्यादि, प्रमाणमन्तरेणापि व्यवस्थापकं स्यादेवं तत्त्वसंस्थितिः शून्यत्वेन, अत्र समाधिः–अन्यथा न तत्त्वसं-
स्थितिः, 'इति' एवं 'सुव्यक्तं' स्पष्टम् 'इदं'तत्त्वेतरस्थापनम् ईश्वरचेष्टितं, प्रमाणाभावाविशेषात् ॥ ४७२ ॥ पुनरप्याह–
'उक्त'मित्यादि, 'उक्तं' शून्यताऽभिधायि 'विहाय' मुक्त्वा मानं चेच्छून्यताऽन्यस्य वस्तुनः प्रमेयस्य रूपादेः, अत्रोत्तरं–
'शून्यत्वे' असत्त्वे प्रतिपाद्यस्य श्रोत्रादेः प्रमेयस्य असत्त्व इत्यर्थः, ननु निश्चितं व्यर्थः परिश्रमः, श्रोत्रसत्त्वात् ॥ ४७३ ॥
एवमप्यनिष्टापत्तिं दर्शयति–'तस्याप्ये'त्यादिना, तस्य–श्रोतुः प्रश्नयितुर्वा अशून्यतायां–सत्त्वे प्राश्निकानां बहुत्वतः, तेषा-
मपि प्रतिपाद्यत्वात्, 'प्रभूताशून्यतासिद्धिः' प्रभूतानामशून्यत्वप्रतिष्ठा अनिष्टा संप्रयुज्यते बलादेवोक्तन्यायात् ॥ ४७४ ॥
किञ्च–'यावता'मित्यादि, 'यावतां' प्रमातॄणामस्ति 'तन्मानं' शून्यताविषयं 'प्रतिपाद्याः' प्रतिवादिनः, तथा च 'ये'
केचन सन्ति ते सर्व एव न सन्ति 'इति' एवं 'प्रभूतानां' वस्तूनाम् 'अशून्यता' असत्तेति निगमनम् ॥ ४७५ ॥ अस्य
विषयविभागाभिधित्सयाऽऽह–'एवं चे'त्यादि, एवं सति शून्यवादोऽपि उक्तलक्षणः 'तद्विनेयानुगुण्यतः' शून्यवादिवि-

नेयानुगुण्येन अभिमायस इत्युक्तत्त्वाभिधानयुक्त्या लभ्यत एव एकेन 'तत्त्ववेदिना' बुद्धेन इति सुगतमतवार्त्ताधिकार' ॥ ४७६ ॥ वार्त्तान्तरमाह—

अन्ये त्वाहुरनाद्येव, जीवाजीवात्मकं जगत् । सदुत्पादव्ययध्रौव्ययुक्तं शास्त्रकृतश्रमाः ॥ ४७७ ॥
घटमौलिसुवर्णार्थी, नाशोत्पादस्थितिष्वयम् । शोकप्रमोदमाध्यस्थ्य, जनो याति सहेतुकम् ॥ ४७८ ॥
पयोव्रतो न दध्यत्ति, न पयोऽत्ति दधिव्रत । अगोरसव्रतो नोभे, तस्मात्तत्त्वं त्रयात्मकम् ॥ ४७९ ॥

'अन्ये त्वि'त्यादि, 'अन्ये तु' जैना आहुः, किमित्याह—अनाद्येव, न तु कृत्रिमं, किं तत् ? इत्याह—जीवाजीवात्मकं 'जगत्' त्रैलोक्यमेव, एतदेव विशेष्यते—'सदुत्पादव्ययध्रौव्ययुक्तं' निरुपचरितोत्पादादिमत् 'शास्त्रकृतश्रमा' विपश्चितः 'अन्ये' इति ॥ ४७७ ॥ तन्मतमुपन्यस्यति—'घटे'त्यादिना—घटमौलिसुवर्णार्थी, मौलिः—मुकुटः, नाशोत्पादस्थितिषु घटमौलिसुवर्णानां अयं जनो, रायपुत्रादीति योगः, किमित्याह—शोकप्रमोदमाध्यस्थ्यं याति 'सहेतुकं' सनिमित्तं यातीति त्रयात्मकं तत्त्वम् ॥ ४७८ ॥ प्रकारान्तरेणैव तदेवाह—'पय' इत्यादिना—'पयोव्रत' क्षीरभोजनव्रतः 'न दध्यत्ति' न दधि भुङ्क्ते, कथञ्चिद्भेदात्, एवं न पयोऽत्ति दधिव्रतः, उक्तोपपत्तेरेव, तथा 'अगोरसव्रत' आरनालादिभोजनव्रतः नोभे—न पयोदधिनी अत्ति, उभयोर्गोरसत्वात्, यस्मादेवं तस्मात्तत्त्वं त्रयात्मकं, निमित्तभेदमन्तरेण प्रयोजनभेदासिद्धेः ॥ ४७९ ॥ वार्त्तान्तरमाह—'अत्रापी'त्यादिना—

अत्राप्यभिदधत्यन्ये, विरुद्धं हि मिथस्त्रयम्। एकत्रैवैकदा नैतद्, घटां प्राञ्चति जातुचित् ॥ ४८० ॥
उत्पादोऽभूतभवनं, विनाशस्तद्विपर्ययः। ध्रौव्यं चोभयशून्यं यदेकदैकत्र तत्कथम्? ॥ ४८१ ॥
शोकप्रमोदमाध्यस्थ्यमुक्तं यच्चात्र साधनम्। तदप्यसाम्प्रतं यत्तद्वासनाहेतुकं मतम् ॥ ४८२ ॥
किञ्च स्याद्वादिनो नैव, युज्यते निश्चयः क्वचित्। स्वतन्त्रापेक्षया तस्य, न मानं मानमेव यत् ॥४८३॥
संसार्यपि न संसारी, मुक्तोऽपि न स एव हि। तदतद्रूपभावेन, सर्वमेवाव्यवस्थितम् ॥ ४८४ ॥
त आहुर्मुकुटोत्पादो, न घटानाशधर्मकः। स्वर्णान्नवाऽन्य एवेति, न विरुद्धं मिथस्त्रयम् ॥ ४८५ ॥
न चोत्पादव्ययौ न स्तो, ध्रौव्यवत् तद्धिया गतेः। नास्तित्वे तु तयोर्ध्रौव्यं, तत्त्वतोऽस्तीति न प्रमा ४८६
न नास्ति ध्रौव्यमप्येवमविगानेन तद्गतेः। अस्याश्च भ्रान्ततायां न, जगत्यभ्रान्तनागतिः ॥ ४८७ ॥
उत्पादोऽभूतभवनं, स्वहेत्वन्तरधर्मकम्। तथा प्रतीतियोगेन, विनाशस्तद्विपर्ययः ॥ ४८८ ॥
तथैतदुभयाधारस्वभावं ध्रौव्यमित्यपि। अन्यथा त्रितयाभाव, एकदैकत्र किं न तत्? ॥ ४८९ ॥
एकत्रैवैकदैवैतदित्थं त्रयमपि स्थितम्। न्याय्यं भिन्ननिमित्तत्वात्तदभेदे न युज्यते ॥ ४९० ॥

इष्यते च परैर्मोहात्तत्क्षणस्थितिधर्मिणि । अभावेऽन्यतमस्यापि, तत्र तत्त्वं न यद्भवेत् ॥ ४९१ ॥
भावमात्रं तदिष्टं चेत्तदित्थं निर्विशेषणम् । क्षणस्थितिस्वभावं तु, नह्युत्पादव्ययौ विना ॥ ४९२ ॥
तदित्थंभूतमेवेति, ग्राभमस्तो न जातुचित् । मृत्वाऽभावश्च नाशोऽपि, तदेवेति न लौकिकम् ॥४९३॥
वासनाहेतुकं यच्च, शोकादिपरिकीर्तितम् । तदयुक्तं यतश्चित्रा, सा न जात्वनिबन्धना ॥ ४९४ ॥
सदा भावेतरापत्तिरेकभावाच्च वस्तुनः । तद्भावेऽतिप्रसङ्गादि, नियमात्सम्प्रसज्यते ॥ ४९५ ॥

'अत्रापि' स्यात्मकतत्स्वभावे भणिष्यति 'अन्ये' सौगतादयः 'विरुद्धं हि' विरुद्धमेव 'मिथः' परस्परं 'त्रयम्' उत्पादादि, यत एवम् अतः 'एकत्रैव' वस्तुनि 'एकदा' एकस्मिन् काले न 'एतत्' त्रयं घटां प्राञ्चति जातुचित्, कदाचिद् घटत इत्यर्थः ॥ ४८० ॥ एतदेव स्पष्टयति 'उत्पाद' इत्यादिना–उत्पाद 'अभूतभवनम्' अभूतप्रादुर्भावः विनाशः 'तद्विपर्यय' भूत्वाभवनलक्षणः ध्रौव्यं च 'उभयशून्यं' उत्पादविनाशरहितं 'यत्' यस्मात् 'तत्' तस्मादेकदैकत्र त्रयं कथं? लक्षणभेदात्, नैवेत्यर्थः ॥ ४८१ ॥ अनन्तरोदितसाधनलोपमाह–'शोक' इत्यादिना–शोकप्रमोदमाध्यस्थ्यं राजपुत्र्यादेः रुक यथात्र साधनं प्राग् उक्तेनेन तदपि 'असाम्प्रतं' अशोभनं, कथमित्याह–'यत्' यस्मात् 'तत्' शोकादि 'वासनाहेतुकम्' आन्तरवासनानिमित्तं 'मतम्' इष्टं, न वस्तुनिमित्तं, सर्वेषां शोकादिप्रसङ्गात् ॥४८२॥ उपचयमाह–'किञ्च स्याद्' इत्यादि, किञ्च 'स्याद्वादिनः' अनेकान्तवादिनो नैव 'युज्यते' घटते निश्चयः 'क्वचित्' वस्तुनि, कथमित्याह–'स्वतत्त्वापेक्षया'

स्वसिद्धान्तनीत्या, 'तस्य' स्याद्वादिनो न 'मानं' प्रमाणं मानमेव यत्, स्यान्मानमिति सिद्धान्ताद् ॥ ४८३ ॥ उपचय-माह-'संसारी'त्यादिना—संसार्यपि जीवो न संसारी, तथाऽपि मुक्तोऽपि तत्त्वदृष्ट्या न स एव हि-मुक्त एव, कथमि-त्याह-'तदतद्रूपभावेन' स्याद्वादतस्तदतदात्मकत्वात् सर्वस्य, एवं सर्वमेव संसारे अव्यवस्थितमस्येत्यभिप्रायः ॥ ४८४ ॥ अत्र सिद्धान्तमधिकृत्याह-'ते आहु'रित्यादि, 'ते' जैनाः 'आहुः' प्रतिपादयन्ति-मुकुटोत्पादः विवक्षितः न घटानाशध-र्मकः, किन्तु घटनाशस्वभाव एव, तत्रैव तद्विभावात्, तथा 'स्वर्णात्' काञ्चनात् नचान्य एव, तथाऽनुपलब्धेः, 'इति' एवं न विरुद्धं मिथस्त्रयं, न्यायानुभवसिद्धत्वादिति ॥ ४८५ ॥ एतदेव समर्थयन्नाह-'नचे'त्यादिना-न चोत्पादव्ययौ 'न स्तः' न विद्येते, कल्पितत्वात्, कुतः? इत्याह-ध्रौव्यवदविगानेन 'तद्धिया' उत्पादव्ययधिया 'गतेः' परिच्छेदात्, तथाऽपि 'नास्तित्वे तु' नास्तित्व एव 'तयोः' उत्पादव्यययोरभ्युपगम्यमाने ध्रौव्यं 'तत्त्वतः' परमार्थतोऽस्तीति न प्रमा, उत्पादादितुल्ययोगक्षेमत्वादेव इति ॥ ४८६ ॥ द्रव्या(पर्यया)स्तिकमतं निराचिकीर्षयन्नाह-'न नास्ती'त्यादि, न नास्ति ध्रौव्यमप्येवं, किं तु तदस्त्येव, कुतः? इत्याह-अविगानेन 'तद्गतेः' ध्रौव्यपरिच्छेदात्, 'अस्याश्च' ध्रौव्यगतेरविगान-सिद्धाया भ्रान्ततायां सत्यां, किमित्याह—न 'जगत्यभ्रान्ततागतिः' त्रैलोक्येऽभ्रान्ततापरिच्छित्तिः, उत्पादव्ययगत्योर-प्यविगानसिद्धतां विहायाधिकलक्षणायोगात् ॥ ४८७ ॥ परोक्तदूषणपरिहारायाह-'उत्पाद'इत्यादि, उत्पादोऽभूतभवनं नाविशेषेणैव, किन्तु 'स्वहेत्वन्तरधर्मकं' स्वयं हेतुव्ययस्वभावं, कुत एतत्?-तथा प्रतीतियोगेन, अन्यत्र व्ययबुद्ध्यसिद्धेः, तथा विनाशः 'तद्विपर्ययः' भूताभवनम्, अन्यभवनस्वभावमित्यर्थः ॥ ४८८ ॥ 'तथैत'दित्यादि, तथैतत् 'उभयाधार-

स्वभाव' उक्तलक्षणोत्पादव्ययाधारस्वभाव ध्रौव्यमित्यपि, न पुनरन्यथाभूतम्, इत्य चैतदङ्गीकर्तव्यमन्यथा—यद्येवं नेष्यते ततः 'त्रितयाभाव' उत्पादव्यययोरवस्तु तु विरुद्धो(र्वस्त्वनुरूपयो) रसत्वाद्वस्तुनोऽपि तदनुरूपस्य, परिणामित्वा दिति, यत एवमत एकवैकस्य किं न 'तत्' उत्पादादि?, स्यादेव, तस्यैव तथास्वभावत्वादिति ॥ ४८९ ॥ उपसंहरन्नाह—'एकत्रैवे'त्यादि, एकत्रैवैकदैवैतत् 'इत्थम्' उक्तेन न्यायेन त्रयमपि स्थितम्—उत्पादादि, एतच्च न्याय्यं, 'भिन्ननिमित्त त्वात्' अभूतभवनभूतभवनोभयाधारस्वभावस्वभेदात्, 'तद्भेदे' निमित्ताभेदे न युज्यते एकदैवैतत्त्रयमिति ॥ ४९० ॥ ततः किमित्याह—'इष्यते चे'त्यादि, इष्यते च 'परैः' सौगतैर्मोहादेतोः 'तत्' त्रितयं, क्व? इत्याह—'क्षणस्थितिधर्मिणि' क्षणस्थितिस्वभावे वस्तुनि, कथमिष्यते? इत्याह—अभावेऽन्यतमस्याप्युत्पादादेः 'तत्र' वस्तुनि 'तस्य' क्षणस्थितिधर्म कस्य न 'यत्' यस्मात्स्यात्, तथाहि—क्षणस्थितेः उत्पादस्योर्ध्वाभावो न भवति, नान्यथा ॥४९१॥ पराभिप्रायमभिधातुमाह—'भावे'त्यादि, भावमात्रं तदिष्टं चेत्, तत्—वस्तु, अत्राह—तद्भावमात्रमित्यंभूतमेवेति, (कुतः? निर्विशेषणत्वात्) क्षण-स्थितिस्वभावं तु सविशेषण न ह्युत्पादव्ययौ विना, सावधिकत्वात् ॥ ४९२ ॥ अत्राह—'तदित्य'मित्यादि, 'तत्' भाव मात्रम् 'इत्थभूतमेवे'ति क्षणस्थितिस्वभावमेवेति, अत्रोत्तरं—'प्राग्' झटित्येव 'न भस्त' आकाशात् न जातुचित्, उत्प त्तिमन्वराऽप्युत्पादसिद्धेः, भूत्वाऽभावश्च—द्वितीयक्षणे नाशोऽपि 'तद्वेव' भावनामात्रमेवेति न लौकिकं, तद्भवनस्यैव लोके नाशत्वेः ॥ ४९३ ॥ परोक्तपरिहारमेवाह—'वासने'त्यादि, वासनाहेतुकं यच्च पूर्वपक्षवादिना शोकादि परिकीर्तितं वस्तुतः सौगतेन, तदयुक्तं, यतः 'चित्रा' नानाप्रकारा शोकादिजनकत्वेन 'सा' वासना अनन्तरज्ञानक्षणरूपा, न ज्ञानस्य

णश्च सर्वेषां घटादावविशिष्ट इत्यभिप्रायः ॥ ४९४ ॥ अनिबन्धनत्वे दोषमाह—'सदे'त्यादिना—सदा भावेतरापत्तिश्चित्त-वासनायां, दोषान्तरमाह—एकभावाच्च 'वस्तुनः' घटमौल्यादेः, 'तद्भावे' शोकादिनिमित्तचित्रज्ञानवासनाभावे 'अति-प्रसङ्गादि' विपर्ययानेकस्वभावत्वादि नियमात् संप्रसज्यते इत्यपकर्ण्यमेतत् ॥ ४९५ ॥

न मानं मानमेवेति, सर्वथाऽनिश्चयश्च यः। उक्तो न युज्यते सोऽपि, यदेकान्तनिबन्धनः ॥ ४९६ ॥

मानं तन् मानमेवेति, प्रत्यक्षं लैङ्गिकं ननु। तत्तचेन्मानमेवेति, स्यात्तद्भावादृते कथम् ? ॥ ४९७ ॥

न स्वसत्त्वं परासत्त्वं, तदसत्त्वविरोधतः। स्वसत्त्वासत्त्ववन्न्यायान्न च नास्त्येव तत्र तत् ॥ ४९८ ॥

परिकल्पितमेतच्चेन्न त्विरथं तत्त्वतो न तत्। ततः क इह दोपश्चेन्न तु तद्भावसङ्गतिः ॥ ४९९ ॥

अनेकान्तत एवातः, सम्यग्मानव्यवस्थितेः। स्याद्वादिनो नियोगेन, युज्यते निश्चयः परम् ॥ ५०० ॥

दोपान्तरपरिहारमाह—'न मान'मित्यादिना—न मानं मानमेवेत्यभिसंधाय सर्वथाऽनिश्चयः पूर्वपक्षवादिना उक्तो न युज्यते 'सोऽपि' अनिश्चयः, कुतः ? इत्याह—यदेकान्तनिबन्धनः स इति ॥ ४९६ ॥ एतदेव स्पष्टयति—'मान'मित्यादि-ना—मानं चेन्मानमेवेत्येकान्तः, अत्र दोषः—प्रत्यक्षं लैङ्गिकं न तु, सर्वथा मानत्वात्, तत्तचेत्प्रत्यक्षं प्रत्यक्षमेव नानुमा-नमित्याशङ्क्याह—मानमेवेत्येकान्तेन स्यात् 'तद्भावादृते' अनुमानमानत्वमन्तरेण कथं ?, नैव, प्रत्यक्षस्य स्वमानत्वेनैव मानत्वाद् अनुमानमानत्वेन चामानत्वादिति ॥ ४९७ ॥ नच स्वमानमेवेतरमानत्वमित्याह—'न स्वसत्त्व'मित्यादि, इह

सर्वभावानामेव न स्वसत्त्व परासत्त्व, किं तर्हि ?, कथञ्चिदन्यत्, कुतः ? इत्याह–'तद्सत्त्वविरोधतः' अभिन्ननिमित्तत्वे सत्त्वस्यैवासत्त्वविरोधात्, नास्त्येव तत्र सत्त्वमित्याह–स्वसत्त्वासत्त्ववत्, यथा स्वसत्त्वासत्त्व नास्ति स्वसत्त्वाभावप्रसङ्गात्, एवं न्यायात् नच नास्त्येव तत्र–स्वसत्त्वे 'तत्' परासत्त्वं, तत्सत्त्वप्रसङ्गात्, एवं हि तत्र भवत्येवेतिवद्विरोधि सत्त्व स्यादिति ॥ ४९८ ॥ अत्रैवाक्षेपपरिहारावाह–'परिकल्पिते'त्यादिना, परिकल्पितमेतदेवात्र परासत्त्वम्, अत्रोत्तरं–न त्विर्थ वस्तुतो, न तत् तत्र परासत्त्व, ततः क इह दोषश्चेत् यदि न तत्र परासत्त्वम्, अत्रोत्तर–न तु 'वज्रायसङ्गतिः' परमाव सङ्गतिरित्यर्थः ॥ ४९९ ॥ स्वपक्षे निगमयति–'अनेका तत' इत्यादिना—अनेकान्तत एव 'अत' अस्मात्कारणात् सम्यग्मानव्यवस्थितेः, तदतदात्मकत्वेन, स्याद्वादिनो 'नियोगेन' नियमेनैव युज्यते निश्चयः, पर नान्यस्य, एकपक्षाभिनिवेश नाभावादिति ॥ ५०० ॥ साम्प्रतमात्मनः कृतार्थतामाह—

एतेन सर्वमेवेति, यदुक्त तन्निराकृतम् । शिष्यव्युत्पत्तये किञ्चित्तथाऽप्यपरमुच्यते ॥ ५०१ ॥
ससारी चेत्स एवेति, कथं मुक्तस्य सभव ? । मुक्तोऽपि चेत्स एवेति, व्यपदेशोऽनिबन्धनः ॥५०२॥
ससाराद्विप्रमुक्तो यन्मुक्त इत्यभिधीयते । नैतत्तस्यैव तद्भावमन्तरेणोपपद्यते ॥ ५०३ ॥

'एतेने'त्यादि, 'एतेन' अनन्तरोदितेन स्याद्वादसाधनेन सर्वमेवेति यदुक्तं पूर्वपक्षवादिना तन्निराकृतं, तुल्ययोगक्षेमत्वात्, शिष्यव्युत्पत्तये, व्युत्पत्त्यर्थं, 'किञ्चित्' लेशतस्तथाऽप्यपरमुच्यते, स्याद्वादसङ्गतमेव ॥ ५०१ ॥ एतदेवाह–'ससा

री चे'त्यादिना–संसारी चेत्स एवेति–संसार्येवैकान्तेन, अत्रोत्तरं–कथं मुक्तस्य संभवः?, अवीजत्वादिति भावः, मुक्तोऽपि चेत्स एवेति–मुक्त एवैकान्तेन, अत्रोत्तरं–व्यपदेशोऽनिबन्धनः, मुक्त इति, निमित्तायोगात् ॥ ५०२ ॥ एतदेव स्पष्टयति– 'संसारा'दित्यादिना–संसाराद्विप्रमुक्तो 'यत्' यस्मान्न्यायेन मुक्त इत्यभिधीयते, लौकिकमेव तत्, किमित्याह– न 'एतत्' इत्थम्भूतं मुक्तत्वं 'तस्यैव' संसारिणः 'तद्भावमन्तरेण' मुक्तभावव्यतिरेकेणोपपद्यते, अवीजत्वादिति ॥ ५०३ ॥ यदि नामैवं ततः किमित्याह—

तस्यैव च तथाभावे, तन्निवृत्तीतरात्मकम् । द्रव्यपर्यायवद्वस्तु, बलादेव प्रसिद्ध्यति ॥ ५०४ ॥

लज्जते बाल्यचरितैर्बाल एव न चापि यत् । युवा न लज्जते चान्यस्तैरायत्यैव चेष्टते ॥ ५०५ ॥

युवैव न च वृद्धोऽपि, नान्यार्थं चेष्टनं च तत् । अन्वयादिमयं वस्तु, तदभावोऽन्यथा भवेत् ॥ ५०६ ॥

अन्वयो व्यतिरेकश्च, द्रव्यपर्यायसञ्ज्ञितौ । अन्योऽन्यव्याप्तितो भेदाभेदवृत्त्यैव वस्तु तौ ॥ ५०७ ॥

नान्योऽन्यव्याप्तिरेकान्तभेदेऽभेदे च युज्यते । अतिप्रसङ्गादैक्याच्च, शब्दार्थानुपपत्तितः ॥ ५०८ ॥

अन्योऽन्यमिति यद्भेदं, व्याप्तिश्चाह विपर्ययम् । भेदाभेदे द्वयोस्तस्मादन्योऽन्यव्याप्तिसंभवः ॥ ५०९ ॥

एवं न्यायाविरुद्धेऽस्मिन्, विरोधोद्भावनं नृणाम् । व्यसनं वा(धी)जडत्वं वा, प्रकाशयति केवलम् ५१०

न्यायात् खलु विरोधो य , स विरोध इहोच्यते । यद्वदेकान्तभेदादौ, तयोरेवाप्रसिद्धित ॥ ५११ ॥
मृद्द्रव्य यन्न पिण्डादि, धर्मान्तरविवर्जितम् । यद्वा तेन विनिर्मुक्त, केवल गम्यते क्वचित् ॥ ५१२ ॥
ततोऽसत् तत् तथा न्यायादेक वोभयसिद्धित । अन्यत्रातो विरोधस्तदभावापत्तिलक्षण ॥ ५१३ ॥

'तस्यैवे'त्यादि, 'तस्यैव च' संसारिणः 'तथाभावे' मुक्तभावे 'तन्निवृत्तीतरात्मक' निवृत्त्यनिवृत्तिस्वभावं, द्रव्यपर्यायवस्तु स्याद्वादनीत्या फलादेव प्रसिद्ध्यति, तस्यैव तथाभवनादिति ॥ ५०४ ॥ एतदेव लोकानुभवतोऽभिधातुमाह—'लज्जत' इत्यादि, लज्जते, 'वाल्यचरितैः' बालभावचेष्टितैर्धोरक्रीडादिभि बाल एवैकान्तेन, न चापि 'यत्' यस्मात् युवा, किन्तु पर्यायभेदादन्योऽपि, न लज्जते च अन्यः, एकान्तभिन्नसन्तानान्तरो युवा 'तै' बाल्यचरितैः, अन्यो, नान्योऽपि, तथा 'आयत्यैव' आगामिकालभाविवृद्धभावार्थं च 'चेष्टते' अर्थोपार्जने करोति ॥ ५०५ ॥ नचाप्यभेद एवेत्याह—'युवैवे'त्यादि, युवैव, नच वृद्धोऽपि सर्वथा तत्पर्यायापन्न एव, नच नेत्याह—'नान्यार्थं' न सर्वथाऽन्यनिमित्तं चेष्टन च सन्तानान्तरवृद्धवत्, यत्—यस्मात् 'तत्' तस्मात् 'अन्वयादिमत' अन्वयव्यतिरेकवत् वस्तु, प्रतीत्यन्यथानुपपत्तेः, 'तद्भाव' वस्त्वभावोऽन्यथा भवेत्, सर्वथा सद्भावविरोधादित्युक्तम् ॥५०६॥ प्रकृतमेव समर्थयन्नाह—'अन्वय' इत्यादि, अन्वयो व्यतिरेकश्च एतौ द्वावपि 'द्रव्यपर्यायसञ्ज्ञितौ' द्रव्याद्यभिधौ चैतौ वा, 'अन्योऽन्यव्याप्तितः' इतरेतरानुबन्धेन भेदाभेदवृत्त्यैव जात्यन्तरात्मिकया वस्तु, नान्यथेति ॥५०७॥ कथमित्याह—'नान्योऽन्ये'त्यादि, न अन्योऽन्यव्याप्तिः

एकान्तभेदेऽभेदे च युज्यते वस्तुन इति, कुतः ? इत्याह—'अतिप्रसङ्गात्' एकान्तभेदे सर्वभावानां इतरेतरानुवेधरूपा एकान्तभेदेऽभेदे च युज्यते वस्तुन इति, तथा शब्दार्थानुपपत्तित इति ॥ ५०८ ॥ अनुपपत्तित इति तामेवा- व्याप्त्यापत्तेः, ऐक्याच्चैकान्ताभेदो, वाङ्मात्रत्वात्, तथा शब्दशक्तिस्वाभाव्यात्, व्याप्तिश्चाह विप- भिधातुमाह—'अन्योऽन्ये'त्यादि, अन्योऽन्यमिति 'यत्' यस्माच्चेदमाह, तथा शब्दशक्तिस्वाभाव्यात्, नान्यथेति र्ययमभेदमित्यर्थः, यस्मादेवं भेदाभेदे जात्यन्तरात्मके 'द्वयोः' द्रव्यपर्याययोस्तस्मादन्योऽन्यव्याप्तिसंभवो, नान्यथेति ॥ ५०९ ॥ उपसंहरति—'एव'मित्यादि, एवं न्यायाविरुद्धे 'अस्मिन्' भेदाभेदे विरोधोद्भावनं नृणामेतद्विषयं 'व्यसनं' मात्सर्यं 'धीजडत्वं वा' बुद्धिजाड्यं वा 'प्रकाशयति' प्रकटीकरोति केवलं, नान्यत्किञ्चिदिति ॥ ५१० ॥ कथमित्याह— 'न्याया'दित्यादि, न्यायात् खलु विरोधो 'यः' तथाभवनक्षणः स विरोध इहोच्यते लोके, नान्य इति, यद्वदेकान्तभेदादौ— एकान्तभेदेऽभेदे, तयोरेवाप्रसिद्धितः, द्रव्यपर्याययोः ॥ ५११ ॥ कथमप्रसिद्धिः ? इत्याह—'मृद्द्रव्य'मित्यादि, मृद्द्रव्यं 'यत्' यस्मात् न पिण्डादिधर्मान्तरविवर्जितं द्रव्यमात्रमेव केवलं, गम्यते क्वचिदिति योगः, यद्वा पिण्डादिधर्मान्तरं तेन विनिर्मुक्तं मृद्द्रव्येण, केवलमाकारमात्रमेव गम्यते क्वचिन्नैव, तथा प्रतीत्यभावादिति ॥ ५१२ ॥ यतश्चैवमतः किमित्याह— 'तत' इत्यादि, 'ततः' तस्मात् असत्तत्, 'तत्' मृद्द्रव्यपिण्डादि 'तथा' परस्परनिरपेक्षं 'न्यायात्' तथाननुभवलक्षणात्, 'एकं च' एकमेव मृद्द्रव्यपिण्डादीत्येतदप्यसत्, कुतः ? इत्याह—'उभयसिद्धितः' तथोभयोपलब्धेः, यत एवम् 'अन्यत्र' केवलभेदपक्षेऽभेदपक्षे वा 'अतः' तथाऽनुपलब्धिलक्षणात्कारणाद्विरोधः, किंविशिष्टः ? इत्याह—'तदभावापत्तिलक्षणः' द्रव्यपर्यायाभावापत्तिलक्षण इति ॥ ५१३ ॥ प्रसङ्गनिराकरणार्थमाह—

जात्यन्तरात्मके चास्मिन्नानवस्थादिदूषणम् । नियतत्वाद्विविक्तस्य, भेदादेश्चाप्यसम्भवात् ॥ ५१४ ॥
नाभेदो भेदरहितो, भेदो वाऽभेदवर्जित । केवलोऽस्ति यतस्तेन, कुतस्तत्र विकल्पनम् ? ॥ ५१५ ॥
येनाकारेण भेद किं, तेनासावेव ? किं द्वयम् ? । असत्त्वात्केवलस्येह, सतश्च कथितत्वतः ॥ ५१६ ॥
यतश्च तत्प्रमाणेन, गम्यते ह्युभयात्मकम् । अतोऽपि जातिमात्रं तदनवस्थादिकल्पनम् ॥ ५१७ ॥
एव ह्युभयदोषादिदोषा अपि न दूषणम् । सम्यग्जात्यन्तरत्वेन, भेदाभेदप्रसिद्धित ॥ ५१८ ॥
एतेनैतत्प्रतिक्षिप्त, यदुक्त पूर्ववादिभि । विहायानुभव मोहाज्जातियुक्त्यनुसारिभिः ॥ ५१९ ॥
द्रव्यपर्याययोर्भेदे, नैकस्योभयरूपता । अभेदेऽन्यतरस्याननिवृत्तौ चिन्त्यतां कथम् ? ॥ ५२० ॥
यन्निवृत्तौ न यस्येह, निवृत्तिस्तत्ततो यत । भिन्न नियमतो दृष्ट, यथा कर्क क्रमेलकात् ॥ ५२१ ॥
निवर्त्तते च पर्यायो, न तु द्रव्य ततो न सः । अभिन्नो द्रव्यतोऽभेदेऽनिवृत्तिस्तत्स्वरूपवत् ॥ ५२२ ॥
प्रतिक्षिप्तं च यद्भेदाभेदपक्षोऽन्य एव हि । भेदाभेदविकल्पाभ्यां, हन्त । जात्यन्तरात्मकः ॥ ५२३ ॥
जात्यन्तरात्मक चेन, दोषास्ते समियु कथम् ? । भेदाभेदे च येऽस्यन्त, जातिभिन्ने व्यवस्थिताः ॥५२४॥

किञ्चिन्निवर्त्ततेऽवश्यं, तस्याप्यन्यत्तथा न यत् । अतस्तद्भेद एवात्र, निवृत्त्याद्यन्यथा कथम् ? ॥५२५॥
तस्येति योगसामर्थ्याद्भेद एवेति बाधितम् । अभिन्नदेशस्तस्येति, यत्तद्व्याप्त्या तथोच्यते ॥ ५२६ ॥
अतस्तद्भेद एवेति, प्रतीतिविमुखं वचः । तस्यैव च तथाभावात्तन्निवृत्तीतरात्मकम् ॥ ५२७ ॥
नानुवृत्तिनिवृत्तिभ्यां, विना यदुपपद्यते । तस्यैव हि तथाभावः, सूक्ष्मबुद्ध्या विचिन्त्यताम् ॥ ५२८ ॥
तस्यैव तु तथाभावे, तदेव हि यतस्तथा । भवत्यतो न दोषो नः, कश्चिदप्युपपद्यते ॥ ५२९ ॥
इत्थमालोचनं चेदं, अन्वयव्यतिरेकवत् । वस्तुनस्तत्स्वभावत्वात्तथाभावप्रसाधकम् ॥ ५३० ॥
न च भेदोऽपि बाधायै, तस्यानेकान्तवादिनः । जात्यन्तरात्मकं वस्तु, नित्यानित्यं यतो मतम् ॥ ५३१ ॥
प्रत्यभिज्ञाबलाच्चैतदित्थं समवसीयते । इयं च लोकसिद्धैव, तदेवेदमिति क्षितौ ॥ ५३२ ॥
न युज्यते च सन्न्यायादृते तत्परिणामिताम् । कालादिभेदतो वस्त्वभेदतश्च तथागतेः ॥ ५३३ ॥
एकान्तैक्येन नाना यन्नानात्वे चैकमप्यदः । अतः कथं नु तद्भावः ?, तदेतदुभयात्मकम् ॥ ५३४ ॥
तस्यैव तु तथाभावे, कथञ्चिद्भेदयोगतः । प्रमातुरपि तद्भावात्, युज्यते मुख्यवृत्तितः ॥ ५३५ ॥

जात्यन्तरात्मके चास्मिन्नानवस्थादिदूषणम् । नियतत्वाद्विविक्तस्य, भेदादेश्चाप्यसम्भवात् ॥ ५१४ ॥
नाभेदो भेदरहितो, भेदो वाऽभेदवर्जित । केवलोऽस्ति यतस्तेन, कुतस्तत्र विकल्पनम् ? ॥ ५१५ ॥
येनाकारेण भेद किं, तेनासावेव ? किं द्वयम् ? । असत्त्वात्केवलस्येह, सतश्च कथितत्वत ॥ ५१६ ॥
यतश्च तत्प्रमाणेन, गम्यते ह्युभयात्मकम् । अतोऽपि जातिमात्र तदनवस्थादिकल्पनम् ॥ ५१७ ॥
एवं ह्युभयदोषादिदोषा अपि न दूषणम् । सम्यग्जात्यन्तरत्वेन, भेदाभेदप्रसिद्धित ॥ ५१८ ॥
एतेनैतत्प्रतिक्षिप्त, यदुक्त पूर्ववादिभि । विहायानुभव मोहाज्जातियुक्त्यनुसारिभि ॥ ५१९ ॥
द्रव्यपर्याययोर्भेदे, नैकस्योभयरूपता । अभेदेऽन्यतरस्याननिवृत्ती चिन्त्यतां कथम् ? ॥ ५२० ॥
यन्निवृत्तौ न यस्येह, निवृत्तिस्तत्ततो यत । भिन्न नियमतो दृष्ट, यथा कर्क क्रमेलकात् ॥ ५२१ ॥
निवर्त्तते च पर्यायो, न तु द्रव्य ततो न स । अभिन्नो द्रव्यतोऽभेदेऽनिवृत्तिस्तत्स्वरूपवत् ॥ ५२२ ॥
प्रतिक्षिप्तं च यद्भेदाभेदपक्षोऽन्य एव हि । भेदाभेदविकल्पाभ्यां, हन्त ! जात्यन्तरात्मक ॥ ५२३ ॥
जात्यन्तरात्मक चैन, दोषास्ते समियु कथम् ? । भेदाभेदे च येऽत्यन्त, जातिभिन्ने व्यवस्थिता ॥५२४॥

भेदस्याभेदस्य वा, तथा 'सतश्च' विद्यमानस्य च भेदाभेदस्य जात्यन्तरात्मकस्य कथितत्वतः
त्राह-असत्त्वात्केवलस्येह, भेदस्याभेदस्य वा, तथा 'सतश्च' ... यतश्च तत् प्रमाणेन-प्रत्यक्षेणावगम्यते हि 'उभया-
कारणान्निर्विषया विकल्पा इति ॥५१६॥ उपचयमाह-'यतश्चे'त्यादि, यतश्च तत् प्रमाणेन भेदादिविरोधादिति ॥ ५१७ ॥ दोषातिदेशमाह-
त्मकं' अन्वयव्यतिरेकभाक्, अतोऽपि जातिमात्रं तदनवस्थादिकल्पनम् भेदादिविरोधादिति, न दूषणं, कथमित्याह-सम्यगितरेतरव्या-
'एवं ही'त्यादिना-एवं ह्युभयदोषादिदोषा अपि, उभयदोषः-संशय इत्येवमादयो, न दूषणं, कथमित्याह-'एतेने'त्यादिना-'एतेन' अन-
ध्याऽत्यन्तजात्यन्तरत्वेन भेदाभेदप्रसिद्धित इति ॥ ५१८ ॥ यदनेनापाकृतं तदुपन्यस्यति-'एतेने'त्यादिना-'एतेन' अन-
न्तरोदितेन 'एतत्' वक्ष्यमाणलक्षणं 'प्रतिक्षिप्तं' निराकृतं यदुक्तं 'पूर्ववादिभिः' सुबन्धुप्रमुखैः, कथमुक्तमित्याह-'विहा-
य' परित्यज्य अनुभवमविगानेन प्रवृत्तं मोहात् कुतर्कोत्थात् 'जातियुक्त्यनुसारिभिः' विकल्पमात्रवल्भैरिति ॥५१९॥
यदुक्तं तदाह-'द्रव्ये'त्यादिना-द्रव्यपर्याययोर्भेदे सति नैकस्योभयरूपता वस्तुनः, अभेदे अनयोरेवान्यतरस्थानं, पर्यायस्य
द्रव्यस्य वा निवृत्तिरिति चिन्त्यतां कथम्?, एकत्वान्नैवेत्यर्थः ॥५२०॥ एतदेवाह-'यदि'त्यादिना-यन्निवृत्तौ, सामान्ये, न
यस्येह निवृत्तिर्वस्तुनः, 'तत्' निवर्त्तमानं 'ततः' अनिवर्त्तमानात् 'यतः' यस्मात् स्थानं, निवृत्तद्रव्यस्थानं, 'भिन्नम्' अन्यत्
नियमतो दृष्टं, तथा प्रतीतेः, निदर्शनमाह-यथा 'कर्कः' अश्वविशेषः 'क्रमेलकात्' उष्ट्रादिति ॥ ५२१ ॥ प्रकृतयोजन-
माह-'निवर्त्तत' इत्यादिना-निवर्त्तते 'पर्यायः' पिण्डादिः, न तु द्रव्यं' मृदादि, ततो न 'सः' पर्यायः अभिन्नो द्रव्यतः,
किंन्तु भिन्न एव, यतः अभेदे सति, किमित्याह-अनिवृत्तिः, पर्यायस्येति गम्यते, तत्स्वरूपवद्, विपर्ययो वा ॥ ५२२ ॥
एतच्च यथा प्रतिक्षिप्तं तथाऽऽह-'प्रती'त्यादिना-प्रतिक्षिप्तं चेदं, 'यत्' यस्मात् भेदाभेदपक्षः उक्तलक्षणः अन्य एव हि,

नित्यैकयोगतो व्यक्तिभेदेऽप्येषा न सङ्गता । तदिहेति प्रसङ्गेन, तदेवेदमयोगतः ॥ ५३६ ॥
सादृश्याज्ञानतो न्याय्या, न विभ्रमबलादपि । एतद्धयाग्रहे युक्तं, न च सादृश्यकल्पनम् ॥ ५३७ ॥
न च भ्रान्ताऽपि सद्बाधाऽभावादेव कदाचन । योगिप्रत्ययस्तद्भावे, प्रमाणं नास्ति किञ्चन ॥ ५३८ ॥
नाना योगी विजानात्यनाना नेत्यत्र न प्रमा । देशनाया विनेयानुगुण्येनापि प्रवृत्तितः ॥ ५३९ ॥
या च लूनपुनर्जातनखकेशतृणादिषु । इय सलक्ष्यते साऽपि, तदाभासा न सैव हि ॥ ५४० ॥
प्रत्यक्षाभासभावेऽपि, नाप्रमाणं यथैव हि । प्रत्यक्षं तद्वदेवेयं, प्रमाणमवगम्यताम् ॥ ५४१ ॥
मतिज्ञानविकल्पत्वाश्च चानिष्टिरियं यतः । एतद्बलात्तत सिद्धं, नित्यानित्यादि वस्तु न ॥ ५४२ ॥

'जात्यन्तरे'त्यादि, जात्यन्तरात्मके च 'अस्मिन्' भेदाभेदे नैसर्गिकं नानवस्थादि दूषणं, यदुच्यते परैः, कथमित्याह– नियतत्वात् भेदाभेदस्य, तथा विविक्तस्यैकान्तेन भेदाद्वेश्चापि–भेदस्याभेदस्य च असम्भवात् तत्रेति ॥५१४॥ एतदेव स्पष्टयन्नाह–'नाभेद' इत्यादिना–नाभेदो भेदरहितोऽत्र वस्तुनि भेदो वाऽभेदवर्जित एव सर्वथा–केवलोऽस्ति, यत एवं तेन कारणेन कुतः 'अत्र' जात्यन्तरात्मके वस्तुनि विकल्पमेने(नं, कथ ने)त्यत्राह–असत्त्वात्केवलस्येह तस्याभेदस्य(भेदस्य वा) ॥५१५॥ एतदेवाह–'येने'त्यादिना येनाकारेण भेदः किं तेन 'अभावेय' भेदएव, किं 'द्वय' भेदश्चाभेदश्च, कथमिदं विकल्पनं नेत्य

त्राह–असत्त्वात्केवलस्येह, भेदस्याभेदस्य वा, तथा 'सतश्च' विद्यमानस्य च भेदाभेदस्य जात्यन्तरात्मकस्य कथितत्वात्, प्रमाणेन–प्रत्यक्षेणावगम्यते हि 'उभया-
कारणान्निर्विषया विकल्पा इति ॥५१६॥ उपचयमाह–'यतश्चे'त्यादि, यतश्च तत् भेदादिविरोधादिति ॥ ५१७ ॥ दोपातिदेशमाह–
त्मकं' अन्वयव्यतिरेकभाक्, अतोऽपि जातिमात्रं तदनवस्थादिकल्पनम् भेदादिविरोधादिति, न दूषणं, कथमित्याह–सम्यगितरेतरव्या-
'एवं ही'त्यादिना–एवं ह्युभयदोषादिदोषा अपि, उभयदोषः–संशय इत्येवमादयो, न दूषणं, कथमित्याह–'एतेने'त्यादिना–'एतेन' अन-
द्याऽत्यन्तजात्यन्तरत्वेन भेदाभेदप्रसिद्धित इति ॥ ५१८ ॥ यदनेनापाकृतं तदुपन्यस्यति–'एतेने'त्यादिना–'एतेन' अन-
न्तरोदितेन 'एतत्' वक्ष्यमाणलक्षणं 'प्रतिक्षिप्तं' निराकृतं यदुक्तं 'पूर्ववादिभिः' सुबन्धुप्रमुखैः, कथमुक्तमित्याह–'विद्या-
य' परित्यज्य अनुभवमविगानेन प्रवृत्तं मोहात् कुतर्कोत्थात् 'जातियुक्त्यनुसारिभिः' विकल्पमात्रवल्लभैरिति ॥ ५१९ ॥
यदुक्तं तदाह–'द्रव्ये'त्यादिना–द्रव्यपर्याययोर्भेदे सति नैकस्योभयरूपता वस्तुनः, अभेदे अनयोरेवान्यतरस्थानं, पर्यायस्य
द्रव्यस्य वा निवृत्तिरिति चिन्त्यतां कथम् ?, एकत्वान्नैवेत्यर्थः ॥५२०॥ एतदेवाह–'यदि'त्यादिना–यन्निवृत्तौ, सामान्ये, न
यस्येह निवृत्तिर्वस्तुनः, 'तत्' निवर्त्तमानं 'ततः' अनिवर्त्तमानात् 'यतः' यस्मात् स्थानं, निवृत्तद्रव्यस्थानं, 'भिन्नम्' अन्यत
नियमतो दृष्टं, तथा प्रतीतेः, निदर्शनमाह–यथा 'कर्कः' अश्वविशेषः 'क्रमेलकात्' उष्ट्रादिति ॥ ५२१ ॥ प्रकृतयोजन-
माह–'निवर्त्तेत' इत्यादिना–निवर्त्तते 'पर्यायः' पिण्डादिः, न तु द्रव्यं' मृदादि, ततो न 'सः' पर्यायः अभिन्नो द्रव्यतः,
किन्तु भिन्न एव, यतः अभेदे सति, किमित्याह–अनिवृत्तिः, पर्यायस्येति गम्यते, तत्स्वरूपवद्, विपर्ययो वा ॥ ५२२ ॥
एतच्च यथा प्रतिक्षिप्तं तथाऽऽह–'प्रती'त्यादिना–प्रतिक्षिप्तं चेदं, 'यत्' यस्मात् भेदाभेदपक्षः उक्तलक्षणः अन्य एव हि,

कुतः ? इत्याह–भेदाभेदविकल्पाभ्यां हन्त जात्यन्तरात्मकः, इतरेतरगर्भ, इत्यर्थः ॥ ५२३ ॥ यदि नामैवं ततः किमि-त्याह–जात्यन्तरात्मके चैनं–भेदाभेदविकल्प दोषाः 'ते' एकान्ताभिवृत्त्यादयः 'समियु' आगच्छेयुः कथं ?, नैव, किं-भूता दोषाः ? इत्याह–भेदाभेदे च ये 'अत्यन्त' सर्वथा जातिभिन्ने व्यवस्थिताः, नान्यदोषाः अन्यस्येत्यर्थः ॥ ५२४ ॥ अत्राह–'किञ्चिदि'त्यादि, किञ्चिद् यथा निवर्ततेऽवश्यं तस्यापि वस्तुनः, अन्यथा तथा न, न निवर्तते, 'अतः' अस्मात् निवर्तमानानिवर्तमानभावात् तत्रैव एवात्र, इत्थं चैतदङ्गीकर्तव्य, निवृत्तिरनिवृत्तिभेदस्येतदन्यथा कथं,?, नैवेत्यभिप्रायः ॥ ५२५ ॥ अत्रोत्तरम्–'तस्ये'त्यादि, तस्येति निवर्तत इति 'योगसामर्थ्यात्' सम्बन्धसामर्थ्यात् भेद एवेति परवचनम्, अतत्तभेद एवेत्येतद्बाधितं, कथमित्याह–अभिन्नदेश इत्युपलक्षणम्, अभिन्नदेशकालस्वभावस्येति, 'यत्' यस्मात् तद् व्याख्या हेतुभूतं तयोच्यते–तस्य निवर्तत इत्येवमभिधीयते ॥ ५२६ ॥ निगमयन्नाह–'अत' इत्यादि, अतस्तभेद एवेति एतत् परोदितं प्रतीतिविमुखं यथा, कुतः ? इत्याह–तस्यैव हि तथाभावात्, कारणात्, तदनिवृत्त्यात्मकं यत इति ॥५२७॥ इत्थं चैतदङ्गीकृत्यमित्याह–'नानुवृत्ती'त्यादिना–न अनुवृत्तिनिवृत्तिभ्यां प्रत्यक्षसिद्धाभ्यां विना यद् 'उपपद्यते' सम्यग्घटते, कः ? इत्याह–तस्यैव हि तथाभावो वस्तुन इति, सूक्ष्मबुद्ध्या विचिन्त्यतामेतदिति ॥ ५२८ ॥ उपसंहरन्नाह–'तस्यैवे'त्यादि, तस्यैव तु तथाभावे सिद्धे सति तदेव हि यतस्तथा भवति, कारणमेव कार्यरूपतया, अतो न दोषो 'न' अस्माकं कश्चिदप्युपपद्यत इति । एतदुक्तं भवति–कथञ्चिदनिवर्तमानाभिन्नस्वभावं च निवर्तते, तथा निवर्तमानाभिन्नस्व भावं च कथञ्चिदवतिष्ठते इति, प्रतीतिसिद्धमेतदिति ॥ ५२९ ॥ किञ्च–'इत्थ'मित्यादि, इत्यमालोचनं चेदं सम्प्रतीतिसिद्ध,

किमित्याह–तथाभावप्रसा-
किमित्याह–'अन्वयव्यतिरेकवत्' निवृत्त्यनिवृत्त्यात्मकं, वस्तुनस्तत्स्वभावत्वात्कारणात्, किमित्याह–तथाभावप्रसा-
धकं, तस्यैव तथाभावे प्रमाणमित्यर्थः ॥ ५३० ॥ किञ्च–'न चे'त्यादि, न च भेदोऽपि वाधायै–परमार्थतो वाधानिमित्तं,
'तस्य' निवर्त्तमानस्येतरेण, कस्येत्याह–'अनेकान्तवादिनः' स्याद्वादिनः, कुतः ? इत्याह–जात्यन्तरात्मकं वस्तु–सद्,
इतरेतरानुवेधात्, नित्यानित्यं यतो मतं, न नित्यमेवानित्यमेवेति वा ॥ ५३१ ॥ एतत्समर्थयन्नाह–'प्रत्यभिज्ञे'त्यादि, प्रत्य-
भिज्ञाबलाच्च 'एतत्' वस्तुतत्त्वमित्थं समवसीयते नित्यानित्यमिति, इयं च लोके सिद्धैव प्रत्यभिज्ञा, तदेवेदमिति, क्षिता-
वितथस्वरूपेति ॥ ५३२ ॥ न चेयं न्यायान्तरानुसारिणीत्यभिधातुमाह–'न युज्यत' इत्यादि, न युज्यते च सन्न्यायादियं–
प्रत्यभिज्ञा, ऋते तत्परिणामितां, कथमित्याह–'कालादिभेदतः' कालधर्मभेदात् वस्त्वभेदतश्च कारणात् 'तथागतेः' तदे-
वेति कालादिभेदव(द्व)स्त्वभेदपरिच्छित्तेः ॥५३३॥ एतदेव भावयति–'एकान्तैक्य' इत्यादि, एकान्तैक्ये पूर्वापरयोर्न नाना
यत्, कथञ्चिदपि, नानात्वे च सर्वथा एकमप्यदो, नेति वर्त्तते, अतः कथं नु 'तद्भावः' तदेवेदमिति प्रत्यभिज्ञाभावः ?,
अस्ति चायं, ततस्तदेतद् 'उभयात्मकं' निवृत्त्यनिवृत्त्यात्मकं वस्त्विति ॥ ५३४ ॥ स्वपक्षे तस्याभावमाह–'तस्ये'त्या-
दिना–तस्यैव तु तथाभावे, वस्तुनः कथञ्चिद्भेदयोगतः कारणात्, प्रमातुरपि 'तद्भावात्' परिणामभावात् युज्यते मुख्यवृ-
त्तितः, यथोक्ता प्रत्यभिज्ञा ॥ ५३५ ॥ अन्यैस्त्वन्यथाऽभ्युपगम्यते तथा न युज्यत इत्याह 'नित्यैके'त्यादिना–'नित्यै-
कयोगतो' नित्यैकसामान्यतो योगेन व्यतिभेदेऽपि गृह्यमाणे तदाधारे एषा न सङ्गता, प्रत्यभिज्ञा, कुतः ? इत्याह–'तदि-
हेतिप्रसङ्गेन' तत् नित्यमिह व्यक्ताविति प्राप्तेः, तदेवेदमयोगतः ॥ ५३६ ॥ अन्वयाध्यासनेन च सादृश्यनिबन्धनेयमि-

स्याह–'सादृश्ये'त्यादि, सादृश्याज्ञानतः कारणात् भ्रान्त्या, न 'विभ्रमबलादपि' भ्रान्तिसामर्थ्येनापि, हेतु समर्थयति–'एतदभावे' सादृश्याग्रहणे क्षणिकज्ञाने न युक्त, न च सादृश्यकल्पनम्, अतिप्रसङ्गादिति ॥ ५३७ ॥ न चेयमविपर्ययेन भ्रान्तेत्याह–'न चे'त्यादिना–न च भ्रान्ताऽप्येषा, स्वरूपत एव, सद्बाधाऽभावकारणात्, कदाचन, नात्र अक्षेशेषु केशप्रत्ययस्येव सती बाधा, पराभिप्रायमाशङ्क्य परिहरति–'योगिप्रत्ययस्तद्भावे' इति, योगिप्रत्ययस्य तद्बाधाभावे, प्रत्यभिज्ञानं प्रति, किमित्याह–प्रमाणं नास्ति किञ्चन, श्रद्धा विहाय ॥ ५३८ ॥ एतदेव प्रकटयति–'नाना योगी'त्यादि, नाना योगी विजानाति स्वप्रत्यक्षेणैव, 'अनाना ने'ति न पुनरेकमित्यत्र न प्रमा, 'सर्वं क्षणिक'मिति देशना प्रमेत्यत्राह–'देशनायाः' तल्लक्षणाया 'विनेयानुगुण्येनापि' श्रोत्रनुग्रहार्थमृतेऽप्यर्थं तथा प्रवृत्तेः, ब्राह्मणभार्यामृतदेशनावत् न प्रमेति ॥ ५३९ ॥ प्रत्यभिज्ञानाभासताया अस्या भेदमाह–'या चे'त्यादिना–या च लूनपुनर्जातनखकेशतृणादिष्वर्थेषु सिद्धेष्वेव इयं संलक्ष्यते, प्रत्यभिज्ञा, साऽपि 'तदाभासा' सम्यक्प्रत्यभिज्ञाभासा, न 'सैव हि' सम्यक्प्रत्यभिज्ञैव ॥ ५४० ॥ न च तथाऽपि समतिपक्षस्या दुष्टस्येतदाह–'प्रत्यक्षे'त्यादिना–प्रत्यक्षाभासभावे सति नाप्रमाणं यथैव हि लोके प्रत्यक्षं, तद्वदेव 'इयं' प्रत्यभिज्ञा प्रमाणमवगम्यतां, तल्लक्षणेति ॥ ५४१ ॥ न चेयं न तत्प्रमित्यत्राह–'मती'त्यादिना–'मतिज्ञानविकल्पत्वात्' वासनाधारणाफलत्वेन न चानिष्टेः 'इय' प्रत्यभिज्ञा जैनानां यतः, 'एतद्बलात्' प्रत्यभिज्ञाबलात् ततः 'सिद्ध' प्रतिष्ठित नित्यानित्यादि, भावस्यात्मपरस्वरूपाविग्रहः, वस्तु 'न' अस्माकमिति ॥ ५४२ ॥ वार्तान्तरमाह–'अन्ये त्वि'त्यादिना—

अन्ये त्वद्वैतमिच्छन्ति, सद्ब्रह्मादिव्यपेक्षया । सतो यस्माद्भेदकं नान्यत्तच्च तन्मात्रमेव हि ॥ ५४३ ॥

यथा विशुद्धमाकाशं, तिमिरोपप्लुतो जनः । सङ्कीर्णमिव मात्राभिर्भिन्नाभिरभिमन्यते ॥ ५४४ ॥

तथेदममलं ब्रह्म निर्विकल्पमविद्यया । कलुषत्वमिवापन्नं, भेदरूपं प्रकाशते ॥ ५४५ ॥

अत्राप्येवं वदन्त्यन्ये, अविद्या न सतः पृथक् । तच्च तन्मात्रमेवेति, भेदाभासोऽनिबन्धनः ॥ ५४६ ॥

सैवाथाभेदरूपाऽपि, भेदाभासनिबन्धनम् । प्रमाणमन्तरेणैतदवगन्तुं न शक्यते ॥ ५४७ ॥

भावेऽपि च प्रमाणस्य, प्रमेयव्यतिरेकतः । ननु नाद्वैतमेवेति, तदभावेऽप्रमाणकम् ॥ ५४८ ॥

विद्याऽविद्यादिभेदाच्च, स्वतन्त्रेणैव बाध्यते । तत्संशयादियोगाच्च, प्रतीत्या च विचिन्त्यताम् ॥ ५४९ ॥

अन्ये व्याख्यानयन्त्येवं, समभावप्रसिद्धये । अद्वैतदेशना शास्त्रे, निर्दिष्टा नतु तत्त्वतः ॥ ५५० ॥

न चैतद्बाध्यते युक्त्या, सच्छास्त्रादिव्यवस्थितेः । संसारमोक्षभावाच्च, तदर्थं यत्नसिद्धितः ॥ ५५१ ॥

अन्यथा तत्त्वतोऽद्वैते, हन्त! संसारमोक्षयोः । सर्वानुष्ठानवैयर्थ्यमनिष्टं संप्रसज्यते ॥ ५५२ ॥

अन्ये तु अद्वैतमिच्छन्ति, द्वाभ्यामितं द्वीतं द्वीते भवं द्वैतं न द्वैतमद्वैतं, कथमिच्छन्ति ? इत्याह–सद्ब्रह्मादिव्यपेक्षया,

तदेवम् पुरुषस्य सकलकोऽस्यपि, सत्तामात्राधिकृत्याह—सतो यत् भेदकं नान्यत्, येन सत्सदन्तराद्विशिष्यते इति, नन्वस्ति
नीलादीत्याह—तच्च सन्मात्रमेव हि, न नीलादि भावतोऽन्यत्, असत्त्वप्रसङ्गादिति सन्मात्रं तत्त्व, नीलादिभेदश्च भ्रान्त
इति ॥ ५४३ ॥ तदाह—'यथे'त्यादिना—यथा विशुद्धमाकाशम्—असङ्कीर्णं केनचित्, तिमिरोपप्लुतो जनः स्वदोषसामर्थ्येन
सङ्कीर्णमिव 'मात्राभि' केशमक्षिकादिरूपाभिः मिश्रामिरभिमन्यते, उपप्लवाभिभिनोति ॥ ५४४ ॥ दार्ष्टान्तिकयोजना
माह 'तथे'त्यादिना—तथेदम् 'अमलम्' अत्यन्तशुद्धं 'ब्रह्म' सल्लक्षणं 'निर्विकल्प' निरवयवम् 'अविद्यया' कलुषा(ध्या)-
सरूपया कलुषत्वमिवापन्नं नीलादिरूपेण भेदरूपं प्रकाशते, एकरूपमपि सदिति ॥ ५४५ ॥ मार्गान्तराभिधित्सयाऽऽह—
'अत्रापी' त्यादि, 'अत्रापि' अद्वैतपक्षे 'अन्ये' वादिनः वदन्त्येव, कथमित्याह—'अविद्या' तत्कलक्षणा न 'सत' सन्मा
त्रात् 'पृथक्' अन्यैव, 'तच्च' सत् 'तन्मात्रमेव' सन्मात्रमेव 'इति' एवं भेदाभासः नीलादिरूपः 'अनिबन्धन' अन-
कलियपाभावाद्कारण एवेत्यर्थः ॥ ५४६ ॥ परोक्तिपरिहारायाह—'सैवे'त्यादिना—'सैव' अविद्या एव अर्थयं मन्यसे भमे
दरूपाऽपि सन्मात्रतया 'भेदाभासनिबन्धनम्' अविद्यमाननीलादिप्रतिभासकारणम्, एतदाशङ्क्याह—प्रमाणमन्तरेण
अस्यार्थस्य निश्चायकम्, 'एतत्' अन्यथाभूते वस्तुविषयेऽन्यथा प्रतिभासनमिति अवगन्तुं न शक्यते, युक्त्या एव तत्
स्यादित्यभिप्रायः ॥ ५४७ ॥ दोषान्तराभिधित्सयाऽऽह—'भावेऽपी' त्यादि, भावे(पि) च प्रमाणस्य यथोक्तनिश्चयकर्तुः
प्रमेयव्यतिरेकतः, अन्यथा तत्तयाऽयोगात्, ननु नाद्वैतमेवेति, प्रमाणप्रमेयाद्वैतात्, तदभावेऽप्रमाणकं, प्रमाणा
भावे, मद्वैतमिति ॥ ५४८ ॥ दोषान्तराभिधित्सयाऽऽह—'विद्ये'त्यादि, विद्याऽविद्यादिभेदाच्च, आदिशब्दात्प्रमाणप्रमेय

'तत्संशयादियोगाच्च' तदद्वैतसंशयनिर्णयविपर्ययभावाच्च प्रतीत्या च भावग्रहः, स्वतन्त्रेणैव बाध्यते तदेतत् सदद्वैतं, 'तत्संशयादियोगाच्च' तदद्वैतसंशयनिर्णयविपर्ययभावाच्च प्रतीत्या च विचिन्त्यताम्, अद्वैतं बाध्यत इति ॥ ५४९ ॥ वार्त्तान्तराभिधित्सयाऽऽह–'अन्य'इत्यादि, अन्ये व्याख्यानयन्त्येवं जैनादयो, यदुत समभावप्रसिद्धये मुमुक्षूणां सर्वेषु अद्वैतदेशना 'शास्त्रे' श्रावकप्रज्ञप्ते वेदे निर्दिष्टं, नतु तत्त्वतोऽद्वैतमेवेत्यभिप्रायः ॥ ५५० ॥ 'नचैत'दित्यादि, न च 'एतत्' व्याख्यानं बाध्यते युक्त्या, कुतः? इत्यत्राह–'सच्छास्त्रादिव्यवस्थितेः' सच्छास्त्रादि–प्रमाणादिव्यवस्थानात्, व्यवस्थितिश्च संसारमोक्षसद्भावात् एवं व्याख्यातो, मोक्षार्थं यत्नसिद्धितस्तत्साफल्येन ॥ ५५१ ॥ विपक्षे बाधामाह–'अन्यथे'त्यादिना–अन्यथा तत्त्वतोऽद्वैते सति, कयोः इत्याह–हन्त संसारमोक्षयोरेव, किमित्याह–सर्वानुष्ठानवैयर्थ्यं, फलाभावेन, अनिष्टं संप्रसज्यते यमादिविधानादीति ॥ ५५२ ॥—

अन्ये पुनर्वदन्त्येवं, मोक्ष एव न विद्यते । उपायाभावतः किं वा, न सदा सर्वदेहिनाम्? ॥ ५५३ ॥

कर्मादिपरिणत्यादिसापेक्षो यद्यसौ ततः । अनादिमत्त्वात्कर्मादिपरिणत्यादि किं तथा? ॥ ५५४ ॥

तस्यैव चित्ररूपत्वात्तत्तथेति न युज्यते । उत्कृष्टा या स्थितिस्तस्य, यज्जाताऽनेकशः किल ॥ ५५५ ॥

अत्रापि वर्णयन्त्यन्ये, विद्यते दर्शनादिकः । उपायो मोक्षतत्त्वस्य, परः सर्वज्ञभाषितः ॥ ५५६ ॥

दर्शनं मुक्तिबीजं च, सम्यक्त्वं तत्त्ववेदनम् । दुःखान्तकृत्सुखारम्भः, पर्यायास्तस्य कीर्त्तिताः ॥ ५५७ ॥

अनादिभव्यभावस्य, तत्स्वभावत्वयोगतः । उत्कृष्टायास्वतीतासु, तथा कर्म्मस्थितिष्वलम् ॥ ५५८ ॥

तद्भवस्य पुरुषस्य सद्भावोऽस्तीति, एतदाशङ्क्याह—सतो यत् भेदकं नान्यत्, येन सत्सदन्तराद्विशिष्यते इति, नन्वस्ति नीलादीत्याह—तच्च तन्मात्रमेव हि, न नीलादि भावतोऽन्यत्, असत्त्वमसद्भावादिति सन्मात्रे तत्त्वे, नीलादिभेदश्च भ्रान्त इति ॥ ५४३ ॥ तथाह—'यथे'त्यादिना—यथा विशुद्धमाकाशम्—असङ्कीर्णं केनचित्, तिमिरोपप्लुतो जनः स्वदोषसामर्थ्येन सङ्कीर्णमिव 'मात्राभि' केशमक्षिकादिरूपाभिः मिश्रामिवाभिमन्यते, तथप्रवासिद्धिनोति ॥ ५४४ ॥ दार्ष्टान्तिकयोजनामाह 'तथे'त्यादिना—तथेदम् 'अमलम्' अत्यन्तशुद्धं 'ब्रह्म' सलक्षणं 'निर्विकल्पं' निरवयवम् 'अविद्यया' द्वैताख्या(न्या)-कलुषया कलुषत्वमिवापन्नं नीलादिरूपेण भेदरूपं प्रकाशते, एकरूपमपि सदिति ॥ ५४५ ॥ दोषान्तरामिधित्सयाऽऽह—'अत्रापी'त्यादि, 'अत्रापि' अद्वैतपक्षे 'अन्ये' वादिनः वदन्त्येव, कथमित्याह—'अविद्या' उक्तलक्षणा न 'सती' सन्मात्रात् 'पृथक्' अन्यैव, 'तत्' सत् 'तन्मात्रमेव' सन्मात्रमेव 'इति' एवं भेदाभासः नीलादिरूपः 'अनिबन्धन' अनकविषयाभावादकारण एवेत्यर्थः ॥ ५४६ ॥ परोक्तिपरिहारायाह—'सैवे'त्यादिना—'सैव' अविद्या एव अर्थं मन्यसे अभेदरूपाऽपि सन्मात्रतया 'भेदाभासनिबन्धनम्' अविद्यमाननीलादिप्रतिभासकारणम्, एतदाशङ्क्याह—प्रमाणमन्तरेण अस्यार्थस्य निश्चायकम्, 'एतत्' अन्यथाभूते अनेकविषयेऽन्यथा प्रतिभासनमिति अवगन्तुं न शक्यते, युक्त्या यत् तत् स्यादित्यभिप्रायः ॥ ५४७ ॥ दोषान्तरामिधित्सयाऽऽह—'भावेऽपी'त्यादि, भावे(पि) च प्रमाणस्य यथोक्तनिश्चयकर्तुः प्रमेयव्यतिरेकतः, अन्यथा तत्तयाऽयोगात्, ननु नाद्वैतमेवेति, प्रमाणप्रमेययोर्द्वैतात्, तदभावेऽप्रमाणक, प्रमाणाभावे, अद्वैतमिति ॥ ५४८ ॥ दोषान्तरामिधित्सयाऽऽह—'विद्ये'त्यादि, विद्याऽविद्यादिभेदाच्च, भाविद्वयमप्रमाणप्रमेय

भावग्रहः, स्वतन्त्रेणैव बाध्यते तदेतत् सदद्वैतं, 'तत्संशयादियोगाच्च' तदद्वैतसंशयनिर्णयविपर्ययभावाच्च प्रतीत्या च विचिन्त्यताम्, अद्वैतं बाध्यत इति ॥ ५४९ ॥ वार्त्तान्तराभिधित्सयाऽऽह–'अन्य'इत्यादि, अन्ये व्याख्यानयन्त्येवं जैनादयो, यदुत समभावप्रसिद्धये मुमुक्षूणां सर्वेषु अद्वैतदेशना 'शास्त्रे' श्रावकप्रज्ञप्ते वेदे निर्दिष्टं, नतु तत्त्वतोऽद्वैतमेवेत्यभिप्रायः ॥ ५५० ॥ 'नचैत'दित्यादि, न च 'एतत्' व्याख्यानं बाध्यते युक्त्या, कुतः? इत्यत्राह–'सच्छास्त्रादिव्यवस्थितेः' सच्छास्त्रादि–प्रमाणादिव्यवस्थानात्, व्यवस्थितिश्च संसारमोक्षसद्भावात् एवं व्याख्यातो, मोक्षार्थं यत्नसिद्धितस्तत्साफल्येन ॥ ५५१ ॥ विपक्षे बाधामाह–'अन्यथे'त्यादिना–अन्यथा तत्त्वतोऽद्वैते सति, कयोः इत्याह–हन्त संसारमोक्षयोरेव, किमित्याह–सर्वानुष्ठानवैयर्थ्यं, फलाभावेन, अनिष्टं संप्रसज्यते यमादिविधानादीति ॥ ५५२ ॥—

अन्ये पुनर्वदन्त्येवं, मोक्ष एव न विद्यते । उपायाभावतः किं वा, न सदा सर्वदेहिनाम् ? ॥ ५५३ ॥

कर्मादिपरिणत्यादिसापेक्षो यद्यसौ ततः । अनादिमत्त्वात्कर्मादिपरिणत्यादि किं तथा ? ॥ ५५४ ॥

तस्यैव चित्ररूपत्वात्तत्तथेति न युज्यते । उत्कृष्टा या स्थितिस्तस्य, यज्जाताऽनेकशः किल ॥ ५५५ ॥

अत्रापि वर्णयन्त्यन्ये, विद्यते दर्शनादिकः । उपायो मोक्षतत्त्वस्य, परः सर्वज्ञभाषितः ॥ ५५६ ॥

दर्शनं मुक्तिबीजं च, सम्यक्त्वं तत्त्ववेदनम् । दुःखान्तकृत्सुखारम्भः, पर्यायास्तस्य कीर्त्तिताः ॥ ५५७ ॥

अनादिभव्यभावस्य, तत्स्वभावत्वयोगतः । उत्कृष्टाद्यास्वतीतासु, तथा कर्म्मस्थितिष्वलम् ॥ ५५८ ॥

तद्दर्शनमवाप्नोति, कर्म्मग्रन्थिं सुदारुणम् । निर्भिद्य शुभभावेन, कदाचित् कश्चिदेव हि ॥ ५५९ ॥
सति चास्मिन्नसौ धन्यः, सम्यग्दर्शनसंयुतः । तत्त्वश्रद्धानपूतात्मा, रमते न भवोदधौ ॥ ५६० ॥
स पश्यत्यस्य यद्रूपं, भावतो बुद्धिचक्षुषा । सम्यक्शास्त्रानुसारेण, रूपं नष्टाक्षिरोगवत् ॥ ५६१ ॥
तद्दृष्ट्वा चिन्तयत्येवं, प्रशान्तेनान्तरात्मना । भावगर्भं यथाभावं, परं संवेगमाश्रितः ॥ ५६२ ॥
जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुतः । क्लेशाय केवलं पुंसां, अहो ! भीमो भवोदधिः ॥ ५६३ ॥
सुखाय तु परं मोक्षो, जन्मादिक्लेशवर्जितः । भयशक्त्या विनिर्मुक्तो, व्याबाधावर्जितः सदा ॥ ५६४ ॥
हेतुर्भवस्य हिंसादिर्दुःखाद्यन्वयदर्शनात् । मुक्तेः पुनरहिंसादिर्व्याबाधाविनिवृत्तितः ॥ ५६५ ॥
बुद्ध्वैवं भवनैर्गुण्यं, मुक्तेश्च गुणरूपताम् । तदर्थं चेष्टते नित्यं, विशुद्धात्मा यथाऽऽगमम् ॥ ५६६ ॥
दुष्करं क्षुद्रसत्त्वानामनुष्ठानं करोत्यसौ । मुक्तौ दृढानुरागत्वात्, कामीव वनितान्तरे ॥ ५६७ ॥
उपादेयविशेषस्य, न यत्सम्यक् प्रसाधनम् । दुनोति चेतोऽनुष्ठानं, तद्भावप्रतिबन्धतः ॥ ५६८ ॥
ततश्च दुष्करं तत्र, सम्यगालोच्यते यदा । अतोऽन्यदुष्करं न्यायादुपेयवस्तुप्रसाधकम् ॥ ५६९ ॥

सम्यक् प्रीत्या प्रवर्त्तते ॥ ५७० ॥
व्याधिग्रस्तो यथाऽऽरोग्यलेशमास्वादयन् बुधः । कष्टेऽप्युपक्रमे धीरः, सम्यक् प्रीत्या प्रवर्त्तते ॥ ५७१ ॥
संसारव्याधिना ग्रस्तस्तद्वज्ज्ञेयो नरोत्तमः । शमारोग्यलवं प्राप्य, भावतस्तदुपक्रमे ॥ ५७२ ॥
प्रवर्त्तमान एवं च, यथाशक्ति स्थिराशयः । शुद्धं चारित्रमासाद्य, केवलं लभते क्रमात् ॥ ५७३॥
ततः स सर्वविद् भूत्वा, भवोपग्राहिकर्मणः । ज्ञानयोगात् क्षयं कृत्वा, मोक्षमाप्नोति शाश्वतम् ॥ ५७४ ॥
ज्ञानयोगस्तपः शुद्धमित्यादि यदुदीरितम् । ऐदम्पर्येण भावार्थस्तस्यायमभिधीयते ॥ ५७५ ॥
ज्ञानयोगस्य योगीन्द्रैः, परा काष्ठा प्रकीर्त्तिता । शैलेशीसञ्ज्ञितं स्थैर्यं, ततो मुक्तिरसंशयम् ॥ ५७६॥
धर्मस्तच्चात्मधर्मत्वान्मुक्तिदः शुद्धिसाधनात् । अक्षयोऽप्रतिपातित्वात्सदा मुक्तौ तथास्थितेः ॥ ५७७ ॥
चारित्रपरिणामस्य, निवृत्तिर्न च सर्वथा । सिद्ध उक्तो यतः शास्त्रे, न चरित्री न चेतरः ॥ ५७८ ॥
न चावस्थानिवृत्त्येह, निवृत्तिस्तस्य युज्यते । समयातिक्रमे यद्वत्सिद्धभावश्च तत्र वै ॥ ५७९ ॥
ज्ञानयोगादतो मुक्तिरिति सम्यग् व्यवस्थितम् । तन्त्रान्तरानुरोधेन, गीतं चेत्थं न दोषकृत् ॥ ५८० ॥

वार्त्तान्तरमाह—'अन्य' इत्यादिना—अन्ये पुनर्नास्तिकप्राया वदन्त्येवं—यदुत मोक्ष एव परमार्थतो न विद्यते, कथ-

मित्याह—उपायाभावतः कारणात्, तत्सुपाये किं वा न 'सदा' सर्वकालमेव उपायः सर्वदेहिनामेवेति ? ॥ ५५३ ॥ अस्तु समाधेय परामिप्रायमाशङ्क्य परिहरति—'कम्माई'त्यादिना—कर्मादेः, आदिशब्दात्प्रधानादिग्रहः, परिणत्यादिसापेक्ष इति, आदिशब्दाद्विमर्शग्रहः, 'यत्' यस्मा (यदि—चे) दुपायस्ततः अनादिसत्त्वात्तत्कर्मादेः तल्लक्षणस्य 'परिणत्यादि' तल्लक्षणमेव किं तथा ?, कादाचित्कहेत्वन्तराभावादिति ॥ ५५४ ॥ एतदेव स्पष्टयति 'तस्सेवे'त्यादिना—'तस्यैव' कर्मादेर्भिन्नस्वभावः (ततः) 'तत्' परिणत्यादि 'तथा' कादाचित्कमिति, एतच्च युज्यते नीत्या, कुतः ? इत्याह—'उत्कृष्टा' वा स्थितिरुत्कृष्टा प्रभूत्यवाप्तिरूपा च 'तस्य' कर्मादेः 'यत्' यस्मात् जाता 'अनेकशः' बहुशः, किलेत्याप्तवचनमेतदिति ॥ ५५५ ॥ वार्तान्तराभिधित्सयाऽऽह—'अत्थावी' त्यादि, 'अत्रापि' मोक्षाभाववादे वर्णयन्ति 'अन्ये' मोक्षवादिनो जैनाः, विद्यते 'दर्शनादिकः' दर्शनज्ञानचारित्ररूपः 'उपायः' प्राप्तिहेतुः, कस्येत्याह—मोक्षतत्त्वस्य अधिकृतस्य, किम्भूतः ?—परः सर्वज्ञभाषितो, नान्यभाषितोऽभाषितो वा ॥५५६ ॥ किमिदं दर्शनमित्याह—'दर्शन' मित्यादि, 'दर्शनं' सम्यग्दर्शनं, मुक्तिबीजं च तदेव, तथा सम्यक्त्वं तदेव, तत्त्ववेदनं, अज्ञानमाश्रित्य, दुःखान्तकृत् ग्रन्थिभेदात् सुखारम्भोऽस्य एव पर्यायास्तस्य कीर्तिता एत इति ॥ ५५७ ॥ किं वा—"न सदा सर्वदेहिना" मिति यदुक्तमाह—'अनादी'त्यादि, अनादिमत्यभावस्य तत्र जीवसम्बन्धिनः तत्स्वभावत्वयोगतः, प्रकृतिवैचित्र्येण, किमित्याह—'उत्कृष्टावासु' उत्कृष्टप्रभूत्यवाप्तिरूपास्वतीतासु, तथा कर्मस्थितिष्वलं, तेन तेन द्रव्यलिङ्गावाप्तिप्रकारेण ॥ ५५८ ॥ किमित्याह—'तद्दर्शन' मित्यादि, 'तद्दर्शनं' सम्यग्दर्शनमवाप्नोति, कथमित्याह—'कम्मग्रन्थि' मोहनीयबलं

'सुदारुणं' रौद्रं निर्भिद्य 'शुभभावेन' अपूर्वकरणादिना 'कदाचित्' कस्मिंश्चिदेव काले कश्चिदेव हि सत्त्वः, तथाविधभव्यभावत्वे हेत्वन्तरादिति ॥ ५५९ ॥ ततः किमित्याह–'सती'त्यादि, सति चास्मिन् सम्यग्दर्शनसंयुक्तः सन् प्रचलितक्लिष्टकर्मा तत्त्वश्रद्धानपूतात्मा, तेन पवित्रीकृतः, किमित्याह–रमते न 'भवोदधौ' संसारसमुद्रे ॥ ५६० ॥ अरमणकारणमाह–'स पश्यती' त्यादिना–स पश्यति 'अस्य' भवोदधेः 'यद्रूपं' जन्मादि 'भावतः' परमार्थेन 'बुद्धिचक्षुषा' मतिलोचनेन, कथमित्याह–'सम्यक् शास्त्रानुसारेण' सदागमनीत्या, रूपं नष्टाक्षिरोगवत् ॥ ५६१ ॥ कर्मदोषापगमे तद्द्रष्टा यत्करोति तदाह–'त'दित्यादिना–तद् दृष्ट्वा, भवोदधिरूपं, चिन्तयत्येवं–वक्ष्यमाणं प्रशान्तेनान्तरात्मना, क्रोधाद्यनाकुलेन, कथमित्याह–'भावगर्भं' उपयोगसारं 'यथाभावं' यथापदार्थं, न विपर्ययेण, परं 'संवेगं' मोक्षाभिलाषभूतम् 'आश्रितः' प्रतिपन्नः सन्निति ॥ ५६२ ॥ यच्चिन्तयति तदाह–'जन्मे' त्यादिना–जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुतः, अत्र व्याधिः–क्षयादिः, रोगो ज्वरादिः, क्लेशाय केवलं पुंसामहो ! भीमो भवोदधिः, क्लेशो–दुःखं, पुंसामिति प्राण्युपलक्षणम् ॥ ५६३ ॥ तथा– 'सुखाय त्वि' त्यादिना–सुखाय तु परं मोक्षः, प्राणिनां, जन्मादिक्लेशवर्जित इतिकृत्वा, भव्यशक्त्या विनिर्मुक्तः, कार्याभावेन, व्याबाधावर्जितः सदा, औत्सुक्याभावात् ॥ ५६४ ॥ तथा 'हेतु' रित्यादिना—हेतुः 'भवस्य' संसारस्य 'हिंसादिः' हिंसाऽनृतमिथ्यात्वक्रोधादिः, कुतः ? इत्याह–दुःखाद्यन्वयदर्शनात्, भवसंसरणे वितथाऽभिनिवेशाद्युपलम्भात्, मुक्तेः पुनरहिंसादिर्हेतुः, अहिंसासम्यक्त्वक्षान्त्यादिः, कुत इत्याह–व्याबाधाविनिवृत्तेः, अहिंसाद्यन्वयादेव मुक्तेरित्यर्थः ॥ ५६५ ॥ बुद्ध्वैवं–विज्ञाय सम्यक्चिन्तया 'भवनैर्गुण्यं' संसारनिर्गुणत्त्वं

मुक्तेश्च गुणरूपतामेकान्तेन, 'तदर्थं' मुक्त्यर्थं चेष्टते नित्य, सर्वत्र तत्कारम्भित्वात्, विशुद्धात्मा, पापरहितः यथाऽऽगमं, यथैवागमो व्यवस्थितः शास्त्वाद्यपेक्षया तथैव चेष्टत इत्यर्थः ॥ ५६६ ॥ 'दुष्कर' मित्यादि, दुष्कर 'क्षुद्रसत्त्वानां' संसाराभिनन्दिनामपरमार्थदर्शिनामनुष्ठान करोत्यसौ, अहिंसादिपालनाय परीषहादिजयरूपं, किमित्याह–मुक्तो रागानुरागत्वात्, पारमार्थिकाभिलाषभावात्, अन्यथा तदसिद्धेः, स्वनिदर्शनमाह–कामीव वनितान्तरे, अयं हि तदनुरक्तस्त साधये प्रवर्त्तमानो न शीतादि गणयतीत्येतावता निदर्शनं, क्षुद्रसत्त्वानामिदं दुष्कर तत्त्वत इति ॥ ५६७ ॥ एतदाह–'उपादेये'त्यादिना–उपादेयविशेषस्य चिन्तामणिरत्नादेः, तथैवागतस्यार्थितायां सत्यां, किमित्याह–न 'यत्' यस्मात् 'सम्यक् प्रसाधनं' तत्प्राप्त्यव्यभिचारि 'दुनोति' उपतापयति 'चेतः' अन्तःकरणम् 'अनुष्ठान' गमनादि, कुतः ? इत्याह–'तल्लाभप्रतिबन्धत' तस्मिन्–उपादेयविशेषे भावप्रतिबन्धेनान्तराह्लादभावादिति ॥५६८॥ चित्तपीडाऽभावे च न दुष्करता इत्याह–'ततश्चे'त्यादि, ततश्च दुष्करं तत्र, तद्विषयानुष्ठानं, सम्यगालोच्यते यदा, अनर्थत्यागार्थाधिकारेण, अपि स्यात् 'अन्यत्' विपरीतमनुष्ठानं दुःखद दुष्करं 'न्यायात्' न्यायेन, किंभूतमित्याह–हेयवस्तुप्रसाधनं (क), तदात्वे (सुन्दरत्वेऽपि) भावत्वाभावसुन्दरत्वादिति भावः ॥ ५६९ ॥ एतदेव समर्थयति–'व्याधी'त्यादिना–'व्याधिग्रस्त' व्याध्यभिभूतः यथाऽऽरोग्यलेशं कुतश्चिदुपक्रमात् 'आस्वादयन्' अनुभवन्, स्थिताहितक्रः, किमित्याह–कष्टेऽप्युपक्रमे–निःशेषव्याधिवा तत्समर्थे 'धीर' सात्त्विकः सम्यक् प्रीत्या प्रवर्त्तते, तथा भव्यतयाऽऽरोग्यकामत्वात् ॥५७०॥ अत्र दार्ष्टान्तिकयोजनामाह–'संसारे'त्यादिना–संसारव्याधिना ग्रस्तः, जन्मादिरूपेण. तद्वत् ज्ञेयो 'नरोत्तमः' भासन्नभवः, दामारोग्यलवं प्राप्य

कथञ्चिद्भावतः 'तदुपक्रमे' संसारव्याध्युपक्रमे प्रवर्त्तत इति ॥ ५७१ ॥ 'प्रवर्त्तमाने'त्यादि, प्रवर्त्तमान 'एवं च' उक्तेन
प्रकारेण यथाशक्ति स्थिराशयः, कुशलमार्गे, शुद्धं चारित्रमासाद्य, क्लिष्टकर्मविगमेन, केवलं लभते 'क्रमात्' क्षपकश्रेणि-
क्रमेण ॥ ५७२ ॥ 'तत' इत्यादि, 'ततः' केवललाभात् 'सः' भगवान् सर्वविद् भूत्वा, स्वकालेनैव, 'भवोपग्राहिक-
र्मणः' सातवेदनीयादेः 'ज्ञानयोगात्' वक्ष्यमाणरूपात् 'क्षयम्' आत्मनः पृथग्भावमापाद्य 'मोक्षमाप्नोति' अपवर्गमा-
सादयति 'शाश्वतं' नित्यं, पुनरनुत्पत्तेः ॥ ५७३ ॥ 'ज्ञानयोग' इत्यादि, ज्ञानयोगस्तपः शुद्धं, सर्वथा श्रेष्ठमित्यादि, यदु-
दीरितं पूर्वमुपन्यासग्रन्थे, 'ऐदंपर्येण' एकवाक्यतया 'भावार्थः' गर्भरूपः 'तस्य' उदीरितस्यायमभिधीयते साम्प्रतमिति
॥ ५७४ ॥–'ज्ञाने'त्यादि, ज्ञानयोगस्य शुद्धतयोक्तलक्षणस्य 'योगीन्द्रैः' तीर्थकरैः 'परा काष्ठा' उत्कृष्टा कोटिः 'प्रकी-
र्त्तिता' प्रतिपादिता 'शैलेशीसञ्ज्ञितं' परमयोगनिरोधलक्षणाभिधानं 'स्थैर्यं' परमशुभयत्नरूपं, 'ततः' स्थैर्यात् मुक्तिरसं-
शयं, ह्रस्वपञ्चाक्षरोद्गिरणमात्रेण कालेन ॥५७५॥ इदं च धर्म इत्येतदाह–'धर्म' इत्यादिना–धर्मस्तच्च स्थैर्यं, कुतः इत्याह–
'आत्मधर्मत्वात्' आत्मस्वभावत्वात्, मुक्तिदोऽसौ 'शुद्धिसाधनात्' परमशुद्धिकारणत्वेन, 'अक्षयः' शाश्वतः, अप्रति-
पातित्वात् कारणादिति, अप्रतिपातित्वं च सदा 'मुक्तौ' मोक्षे 'तथास्थितेः' स्थैर्येणैव भवनात्, न चैतदनार्षम् ॥ ५७६ ॥
यत आह—'चारित्रे' त्यादिना–चारित्रपरिणामस्य विशिष्टस्य शैलेश्यवस्थाभाविनः निवृत्तिर्न च सर्वथा, किन्तु कथ-
ञ्चित्कर्मापगमनस्वभावत्वेन, कथमेतदेवमित्याह–सिद्ध उक्तो यतः 'शास्त्रे' प्रवचने प्रज्ञापनादौ न चरित्री न चेतरः,
'नोचरित्ती नोअचरित्ती'ति वचनप्रामाण्यात् ॥ ५७७ ॥ इहैवाक्षेपपरिहारावाह 'नचे' त्यादिना, न चास्यानिवृत्त्येह,

मुक्तेश्च गुणरूपतामेकान्तेन, 'तदर्थं' मुक्त्यर्थं चेष्टते नित्य, सर्वत्र तत्फलारम्भित्वात्, विशुद्धात्मा, पापरहितः यथाऽऽगम, यथैवागमो व्यवस्थितः शक्त्याद्यपेक्षया तथैव चेष्टत इत्यर्थः ॥ ५६६ ॥ 'दुष्कर' मित्यादि, दुष्कर 'क्षुद्रसत्त्वाना' संसाराभिनन्दिनामपरमार्थदर्शिनामनुष्ठान करोत्यसौ, अहिंसादिपालनाय परीषहादिजयरूप, किमित्याह–मुक्तौ दृढानुरागत्वात्, पारमार्थिकाभिलाषभावाद्, अन्यथा तदसिद्धः, स्थानिदर्शनमाह–कामीव वनितान्तरे, अयं हि तदनुरक्तस्तत्प्राप्तये प्रवर्त्तमानो न शीतादि गणयतीत्येतावता निदर्शन, क्षुद्रसत्त्वानामिदं दुष्कर तत्त्वत इति ॥ ५६७ ॥ एतदाह–'उपादेये'त्यादिना–उपादेयविशेषस्य चिन्तामणिरत्नादेः, तथैवागतस्यार्थितायां सत्या, किमित्याह–न 'यत्' यस्मात् 'सम्यक् प्रसाधन' तथात्यव्यभिचारि 'दुनोति' उपतापयति 'चेतः' अन्तःकरणम् 'अनुष्ठान' गमनादि, कुतः ? इत्याह–'तल्लाभप्रतिबन्धत' तस्मिन्–उपादेयविशेषे भावप्रतिबन्धेनान्तराह्लादभावादिति ॥५६८॥ विपरीतेऽभावे च न दुष्करता इत्याह–'तत्रश्चे'त्यादि, ततश्च दुष्कर तप, तद्विषयनुष्ठानं, सम्यगालोच्यते यदा, अनर्थत्यागार्थाभिसंधारेण, अपि त्वतः 'अन्यत्' विपरीतमनुष्ठानं दुःखद दुष्करं 'न्यायात्' न्यायेन, किंभूतमित्याह–हेयवस्तुप्रसाधनं (क), तदात्वे (सुन्दरत्वेऽपि) आयत्यामसुन्दरत्वादिति भावः ॥ ५६९ ॥ एतदेव समर्थयति–'व्याधी'त्यादिना–'व्याधिग्रस्त' व्याध्यभिभूतः यथाऽऽरोग्यलेशं कुतश्चिदुपक्रमात् 'आस्वादयन्' अनुभवन्, हिताहितज्ञः, किमित्याह–कष्टेऽप्युपक्रमे–निःशेषव्याधिघातसमर्थे 'धीर' सात्त्विकः सम्यक् प्रीत्या प्रवर्त्तते, तथा भव्यतयाऽऽरोग्यकामत्वात् ॥५७०॥ अत्र दार्ष्टान्तिकयोजनामाह–'संसारे'त्यादिना–संसारव्याधिना ग्रस्तः, जन्मादिरूपेण, तद्वत् ज्ञेयो 'नरोत्तमः' आसन्नभव्यः, धर्मारोग्यलव प्राप्य

वापीकूपतडागानि, देवतायतनानि च । अन्नप्रदानमित्येतत्पूर्त्तमित्यभिधीयते ॥ ५८८ ॥
अतोऽपि शुक्लं यद्वृत्तं, निरीहस्य महात्मनः । ध्यानादि मोक्षफलदं, श्रेयस्तदभिधीयते ॥ ५८९ ॥
वर्णाश्रमव्यवस्थाऽपि, सर्वा तत्प्रभवैव हि । अतीन्द्रियार्थद्रष्टा तन्नास्ति किञ्चित्प्रयोजनम् ॥ ५९० ॥

'अत्रापी'त्यादि, 'अत्रापि' मोक्षवादे अभिदधति 'अन्ये' मीमांसकाः सर्वज्ञो नाम नैव विद्यते क्वचिदिति, कुतः? इत्याह–'तद्ग्राहकप्रमाऽभावात्' सर्वज्ञग्राहकप्रमाणाभावाद् 'इति न्यायानुसारिणः' एवं वक्ष्यमाणन्यायानुसारिण इति ॥ ५८० ॥ न्यायमभिधातुमाह–'प्रत्यक्षे'त्यादिना, प्रत्यक्षेण प्रमाणेन, सकललोकसिद्धेन, सर्वज्ञो नैव गृह्यते, तथाप्रतीत्यभावात्, 'लिङ्गमपि' तद्गमकत्वाभिमतम् अविनाभावि 'तेन' सर्वज्ञेन किञ्चिन्न दृश्यते लोक इति ॥ ५८१ ॥ 'नचे'–त्यादि, न चागमेन सर्वज्ञो गृह्यते, यद् 'असौ' आगमः 'विध्यादिप्रतिपादकः' विधिप्रतिषेधवाचको, न चायं विधिविषयः, तथा अप्रत्यक्षत्वतः कारणान्नैवोपमानेनापि गम्यते सर्वज्ञः, तस्य सादृश्यविषयत्वाद्, अनेन दृश्यमानेन पदार्थेन सदृशः तदीयो गौरिति प्रवृत्तेः ॥ ५८२ ॥ तथा–'नार्थे'त्यादि, नार्थापत्त्या सर्वज्ञो गृह्यते, यतः सर्वोऽर्थः धर्मदेशनादिः 'तं'सर्वज्ञं विनाऽप्युपपद्यते–घटत एव, यत एवमतः 'प्रमाणपञ्चकावृत्तेः' भावोपलंभकप्रमाणपञ्चकाप्रवर्त्तनात् 'तत्र' सर्वज्ञेऽभावप्रमाणता, अभावेन सर्वज्ञाभावगतिरित्यर्थः ॥ ५८३ ॥ यथैनमन्तरेणापि धर्मदेशनाद्युपपत्तिस्तथाऽऽह–'धर्मे'–त्यादिना–धर्माधर्मव्यवस्था तु लोके घटत एव, कुतः? इत्याह–वेदाख्यादागमात्किल, किलेति परोक्षासागमसूचकः, कुतः?

कर्मापगमस्वभावलक्षणतया, निवृत्तिस्तस्य युज्यते, तथाविधसंसारपरिणामस्य । निदर्शनमाह—समयातिक्रमे यद्वद्—यथा सिद्धस्य प्रथमसमयातिक्रान्तौ सिद्धभावस्तत्र ये, सिद्ध एव, न सिद्धत्वनिवृत्तिस्तथाभावस्यादिति ॥ ५७८ ॥ इदानीं निगमयति—'ज्ञाने'त्यादिना—ज्ञानयोगात् 'अतः' अस्मात्कारणात् मुक्तिः 'इति' एतत्सम्यग् व्यवस्थितमुक्तवत्, तस्मान्तरानुरोधेन वेदान्तवाद्यनुसारेण गीत चेत्थं न दोषकृत्, प्रतीत्यर्थाविरोधादिति ॥ ५७९ ॥ वार्त्तान्तराभिधित्सयाऽऽह—

अत्राप्यभिदधत्यन्ये, सर्वज्ञो नैव विद्यते । तद्ग्राहकप्रमाऽभावादिति न्यायानुसारिणः ॥ ५८० ॥

प्रत्यक्षेण प्रमाणेन, सर्वज्ञो नैव दृश्यते । लिङ्गमप्यविनाभावि, तेन किञ्चिन्न दृश्यते ॥ ५८१ ॥

न चागमेन यदसौ, विध्यादिप्रतिपादकः । अप्रत्यक्षस्ततो नैवोपमानेनापि गम्यते ॥ ५८२ ॥

नार्थापत्त्याऽपि सर्वोऽर्थस्तं विनाऽप्युपपद्यते । प्रमाणपञ्चकावृत्तेस्तत्राभावप्रमाणता ॥ ५८३ ॥

धर्माधर्मव्यवस्था तु, वेदाख्यादागमात्किल । अपौरुषेयोऽसौ यस्माद्धेतुदोषविवर्जितः ॥ ५८४ ॥

आद्य चालोकवद्वेदे, सर्वसाधारणे सति । धर्माधर्मपरिज्ञाता, किमर्थं कल्प्यते नरः ? ॥ ५८५ ॥

इष्टापूर्तादिभेदोऽस्मात्सर्वलोकप्रतिष्ठितः । व्यवहारप्रसिद्ध्यैव, यथैव दिवसादयः ॥ ५८६ ॥

ऋत्विग्भिर्मन्त्रसंस्कारैर्ब्राह्मणानां समक्षतः । अन्तर्वेद्यां तु यद्दत्तमिष्टं तदभिधीयते ॥ ५८७ ॥

वापीकूपतडागानि, देवतायतनानि च । अन्नप्रदानमित्येतत्पूर्त्तमित्यभिधीयते ॥ ५८८ ॥

अतोऽपि शुक्लं यद्वृत्तं, निरीहस्य महात्मनः । ध्यानादि मोक्षफलदं, श्रेयस्तदभिधीयते ॥ ५८९ ॥

वर्णाश्रमव्यवस्थाऽपि, सर्वा तत्प्रभवैव हि । अतीन्द्रियार्थद्रष्टा तन्नास्ति किञ्चित्प्रयोजनम् ॥ ५९० ॥

'अत्रापी'त्यादि, 'अत्रापि' मोक्षवादे अभिदधति 'अन्ये' मीमांसकाः सर्वज्ञो नाम नैव विद्यते क्वचिदिति, कुतः ? इत्याह–'तद्ग्राहकप्रमाऽभावात्' सर्वज्ञग्राहकप्रमाणाभावाद् 'इति न्यायानुसारिणः' एवं वक्ष्यमाणन्यायानुसारिण इति ॥ ५८० ॥ न्यायमभिधातुमाह–'प्रत्यक्षे'त्यादिना, प्रत्यक्षेण प्रमाणेन, सकललोकसिद्धेन, सर्वज्ञो नैव गृह्यते, तथाप्रतीत्यभावात्, 'लिङ्गमपि' तद्गमकत्वाभिमतम् अविनाभावि 'तेन' सर्वज्ञेन किञ्चिन्न दृश्यते लोक इति ॥ ५८१ ॥ 'नचे'–त्यादि, न चागमेन सर्वज्ञो गृह्यते, यद् 'असौ' आगमः 'विध्यादिप्रतिपादकः' विधिप्रतिषेधवाचको, न चायं विधिविषयः, तथा अप्रत्यक्षत्वतः कारणान्नैवोपमानेनापि गम्यते सर्वज्ञः, तस्य सादृश्यविषयत्वाद्, अनेन दृश्यमानेन पदार्थेन सदृशः तदीयो गौरिति प्रवृत्तेः ॥ ५८२ ॥ तथा–'नार्थे'त्यादि, नार्थापत्त्या सर्वज्ञो गृह्यते, यतः सर्वोऽर्थः धर्मदेशनादिः 'तं'सर्वज्ञं विनाऽप्युपपद्यते–घटत एव, यत एवमतः 'प्रमाणपञ्चकावृत्तेः' भानोपलंभकप्रमाणपञ्चकाप्रवर्त्तनात् 'तत्र' सर्वज्ञेऽभावप्रमाणता, अभावेन सर्वज्ञाभावगतिरित्यर्थः ॥ ५८३ ॥ यथैनमन्तरेणापि धर्मदेशनाद्युपपत्तिस्तथाऽऽह–'धर्मे'-त्यादिना–धर्माधर्मव्यवस्था तु लोके घटत एव, कुतः ? इत्याह–वेदाख्यादागमात्किल, किलेति परोक्षाप्तागमसूचकः, कुतः ?

इत्याह—अपौरुषेयोऽसौ यस्मात्, वेदाख्य आगमः, हेतुदोषविवर्जित'—रागादिमत्प्रणीतत्वापराधशून्यः ॥ ५८४ ॥ एतदेव स्फुटयति—'आह च'त्यादिना—आह च कुमारिलादि' आलोकयद्वेदे प्रकाशतुल्ये सर्वसाधारणे 'सति' विद्यमान एव धर्माधर्मपरिज्ञाता, साक्षात्करणेन, किमथ कल्प्यते नरः ?, वेदादेव तत्सिद्धेः ॥ ५८५ ॥ यथा सिद्धिस्तथाऽऽह—'इष्टे' त्यादिना—इष्टापूर्तादिभेद' वक्ष्यमाणः 'अस्मात्' वेदात् सर्वलोकप्रतिष्ठितः अविगानेन, कथमित्याह—व्यवहारप्रसिद्ध्यैव, अन्यथा व्यवहाराभावात्, निदर्शनमाह—यथैव वियदादयः, इति सुप्रसिद्धत्वाभिधायीति ॥ ५८६ ॥ इष्टादिस्वरूपमाह—'ऋत्विगि'त्यादिना—'ऋत्विग्भि' यजमानसहायैः मन्त्रसंस्कारै' पूर्तं सद् ब्राह्मणानां समक्षतस्तदन्येषां 'अन्तर्वेद्यां तु' वेदीमध्य एव यद्दत्तं हिरण्यादि इष्टं तदभिधीयते, शास्त्रसिद्धमेतत् ॥ ५८७ ॥ तथा—'वापी त्यादि, वापीकूपतडागानि देवतायतनानि च लोकसिद्धान्येव तथा अन्नप्रदानमित्येतत्सर्वमेव पूर्तमित्यभिधीयते, भोगफलत्वात् ॥ ५८८ ॥ 'अतोऽपी'त्यादि, 'अतोऽपि' इष्टापूर्तात् शुभं यद्भूच, शुभमित्यर्थः, निरीहस्य 'महात्मन' योगिनः कस्यचित्, किं तदित्याह—ध्यानादि मोक्षफलदं, तत पर्यवधि भूत यत् श्रेयस्तदभिधीयते, श्रेयोहेतुत्वात् ॥ ५८९ ॥ 'वर्णे'त्यादि, वर्णाश्रमव्यवस्थापि लोकप्रसिद्धा सर्वा 'तत्प्रमयैव हि' वेदप्रमयैव, यत एवम् अतीन्द्रियार्थद्रष्टा 'तत' तस्मात् पुरुषेण 'नास्ति किञ्चित्प्रयोजनम्' अफला तत्कल्पनेति ॥ ५९० ॥ वाचोन्तरमाह—

अत्रापि ब्रुवते केचिदित्थ सर्वज्ञवादिनः । प्रमाणपञ्चकावृत्तिः, कथ तत्रोपपद्यते ? ॥ ५९१ ॥

सर्वार्थविषयं तच्चेत्, प्रत्यक्षं तन्निषेधकृत् । अभावः कथमेतस्य? न चेदत्राप्यदः समम् ॥ ५९२ ॥
धर्मादयोऽपि चाध्यक्षा, ज्ञेयभावाद् घटादिवत् । कस्यचित्सर्व एवेति, नानुमानं न विद्यते ॥ ५९३ ॥
आगमादपि तत्सिद्धिर्यदसौ चोदनाफलम् । प्रामाण्यं च स्वतस्तस्य, नित्यत्वं च श्रुतेरिव ॥ ५९४ ॥
हृद्गताशेषसंशीतिनिर्णयात्तद्ग्रहे पुनः । उपमाऽन्यग्रहे तत्र, न चान्यत्रापि चान्यथा ॥ ५९५ ॥
शास्त्रादतीन्द्रियगतेरर्थापत्त्याऽपि गम्यते । अन्यथा तत्र नाश्वासश्छद्मस्थस्योपजायते ॥ ५९६ ॥
प्रमाणपञ्चकावृत्तिरेवं तत्र न युज्यते । तथाऽप्यभावप्रामाण्यमिति ध्यान्ध्यविजृम्भितम् ॥ ५९७ ॥
वेदाद्धर्मादिसंस्थापि, हन्ताऽतीन्द्रियदर्शिनम् । विहाय गम्यते सम्यक्, कुत? एतद्विचिन्त्यताम् ॥ ५९८ ॥
न वृद्धसंप्रदायेन, छिन्नमूलत्वयोगतः । न चार्वाग्दर्शिना तस्यातीन्द्रियार्थोऽवसीयते ॥ ५९९ ॥
प्रामाण्यं रूपविषये, संप्रदाये न युक्तिमत् । यथाऽनादिमदन्धानां, तथाऽत्रापि निरूप्यताम् ॥ ६०० ॥
न लौकिकपदार्थेन, तत्पदार्थस्य तुल्यता । निश्चेतुं पार्यतेऽन्यत्र, तद्विपर्ययभावतः ॥ ६०१ ॥
नित्यत्वापौरुषेयत्वाद्यस्ति किञ्चिदलौकिकम् । तत्रान्यत्राप्यतः शङ्का, विदुषो न निवर्त्तते ॥ ६०२ ॥

इत्याह—अपौरुषेयोऽसौ यस्माद्, वेदाख्य आगमः, हेतुदोषविवर्जितः—रागादिमत्प्रणीतत्वापराधशून्यः ॥ ५८४ ॥ एतदेव स्फुटयति—'आह चे'त्यादिना—आह च कुमारिलादि' आलोकवदेव प्रकाशतुल्ये सर्वसाधारणे 'सति' विद्यमान एव धर्माधर्मपरिज्ञाता, साक्षात्करणेन, किमर्थं कल्प्यते नरः ?, वेदादेव तत्सिद्धेः ॥ ५८५ ॥ यथा सिद्धिस्तथाऽऽह—'इष्टे' त्यादिना—इष्टापूर्तादिभेदः वक्ष्यमाणः 'अस्मात्' वेदात् सर्वलोकप्रतिष्ठितः अविगानेन, कथमित्याह—व्यवहारप्रसिद्ध्यैव, अन्यथा व्यवहाराभावात्, निदर्शनमाह—'यथैव विषसादय', इति सुप्रसिद्धताभिधायीति ॥ ५८६ ॥ इष्टादिस्वरूपमाह—'ऋत्विगि'त्यादिना—'ऋत्विग्भिः' यजमानसहायैः मन्त्रसंस्कारैः पूर्वं यत् ब्राह्मणानां समक्षतस्तदन्येषां 'अन्तर्वेद्यां तु' वेदीमध्य एव यद्दत्तं हिरण्यादि इष्टं तदभिधीयते, शास्त्रसिद्धमेतत् ॥ ५८७ ॥ तथा—'वापी'त्यादि, वापीकूपतडागानि देवतायतनानि च लोकसिद्धान्येव तथा अन्नप्रदानमित्येतत्सर्वमेव पूर्तमित्यभिधीयते, भोगफलत्वात् ॥ ५८८ ॥ 'अतोऽपी'त्यादि, 'अतोऽपि' इष्टापूर्तात् शुद्ध यद्वृत्त, शुद्धमित्यर्थः, निरीहस्य 'महात्मनः' योगिनः कस्यचित्, किं तदित्याह—ध्यानादि मोक्षफलदं, तत एवंविधं वृत्त यत् श्रेयस्तदभिधीयते, श्रेयोहेतुत्वात् ॥ ५८९ ॥ 'वर्णे'त्यादि, वर्णाश्रमव्यवस्थापि लोकप्रसिद्धा यथा 'तत्प्रभवैव हि' वेदप्रभवैव, यत एवम् अतीन्द्रियार्थद्रष्टा 'तत्' तस्मात् पुरुषेण 'नास्ति किञ्चित्प्रयोजनम्' भक्त्या तत्कल्पनेति ॥ ५९० ॥ वार्तान्तरमाह—

अत्रापि ब्रुवते केचिदित्थं सर्वज्ञवादिनः । प्रमाणपञ्चकावृत्तिः, कथ तत्रोपपद्यते ? ॥ ५९१ ॥

न चाप्यपौरुषेयोऽसौ, घटते सूपपत्तितः । वक्तृव्यापारवैकल्ये, तच्छब्दानुपलब्धितः ॥ ६१४ ॥
वक्तृव्यापारभावेऽपि, तद्भावे लौकिकं न किम्? । अपौरुषेयमिष्टं वो, वचो द्रव्यव्यपेक्षया ॥ ६१५ ॥
दृश्यमानेऽपि चाशङ्काऽदृश्यकर्तृसमुद्भवा । नातीन्द्रियार्थद्रष्टारमन्तरेण निवर्त्तते ॥ ६१६ ॥
पापादत्रेदृशी बुद्धिर्न पुण्यादिति न प्रमा । न लोको हि विगानत्वात्तद्धेतुत्वाद्यनिश्चितेः ॥ ६१७ ॥
बहूनामपि सम्मोहभावान्मिथ्याप्रवर्त्तनात् । मानसङ्ख्याविरोधाच्च, कथमित्थमिदं ननु? ॥ ६१८ ॥
अतीन्द्रियार्थद्रष्टा तु, पुमान् कश्चिद्यदीष्यते । संभवद्विषयाऽपि स्यादेवंभूताऽर्थकल्पना ॥ ६१९ ॥
अपौरुषेयताऽप्यस्य, नान्यतो ह्यवगम्यते । कर्त्तुरस्मरणादीनां, व्यभिचारादिदोषतः ॥ ६२० ॥
नाभ्यास एवमादीनामपि कर्त्ता विगानतः । स्मर्यते च विगानेन, हन्तेहाप्यष्टकादिकः ॥ ६२१ ॥
स्वकृताध्ययनस्यापि, तद्भावो न विरुध्यते । गौरवापादनार्थं च, तथा स्यादनिवेदनम् ॥ ६२२ ॥
मन्त्रादीनां च सामर्थ्यं, शाबराणामपि स्फुटम् । प्रतीतं सर्वलोकेऽपि, न चाप्यव्यभिचारि तत् ॥ ६२३ ॥
वेदेऽपि पठ्यते ह्येष, महात्मा तत्र तत्र यत् । स च मानमतोऽप्यस्यासत्त्वं वक्तुं न युज्यते ॥ ६२४ ॥

तन्निवृत्तौ न चोपायो, विनाऽतीन्द्रियवेदिनम् । एव च कृत्वा साध्वेतत्कीर्त्तितं धर्मकीर्त्तिना ॥ ६०३ ॥
स्वय रागादिमान्नार्थं, वेत्ति वेदस्य नान्यत । न वेदयति वेदोऽपि, वेदार्थस्य कुतो गति ? ॥ ६०४ ॥
तेनाग्निहोत्र जुहुयात्स्वर्गकाम इति श्रुतौ । खादेत्स्व(त् श्व)मांसमित्येष, नार्थ इत्यत्र का प्रमा ? ॥६०५॥
प्रदीपादिवदिष्टश्चेत्तच्छब्दोऽर्थप्रकाशकः । स्वत एव प्रमाण न, किञ्चिदत्रापि विद्यते ॥ ६०६ ॥
विपरीतप्रकाशश्च, ध्रुवमापाद्यते क्वचित् । तथा ह्रीन्दीवरे दीप , प्रकाशयति रक्तताम् ॥ ६०७ ॥
तस्माच्च चाविशेषेण, प्रतीतिरुपजायते । सङ्केतसव्यपेक्षत्वे, स्वत एवेत्ययुक्तिमत् ॥ ६०८ ॥
साधुर्न वेति सङ्केतो, न चाशङ्का निवर्त्तते । तद्वैचित्र्योपलब्धेश्च, स्वाशयाभिनिवेशत ॥ ६०९ ॥
व्याख्याऽप्यपौरुषेयस्य, मानाभावाच्च सङ्गता । मिथो विरुद्धभावाच्च, तत्साधुत्वाद्यनिश्चितेः ॥ ६१० ॥
नान्यप्रमाणसद्भावात्तत्साधुत्वविनिश्चय । सोऽतीन्द्रिये न यत्त्वाद्यस्तत्तद्भावविरोधत ॥ ६११ ॥
तस्माद् व्याख्यानमस्येद, स्वाभिप्रायनिवेदनम् । जैमिन्यादेर्न तुल्य किं, वचनेनापरेण व ? ॥ ६१२ ॥
एष स्थाणुरयं मार्ग, इति वक्तीह कश्चन । अन्य स्वय ब्रवीमीति, तयोर्भेद परीक्ष्यताम् ॥ ६१३ ॥

चोदनाफलं, स्वर्गादिवत्, (प्रामाण्यं च स्वतः चाक्षुषाद्यध्यक्षवत् तस्य नित्यत्वं च) स्वर्गकेवलार्थिनाऽपि 'श्रुतेरिव' वेदस्येवेत्यर्थः ॥ ५९४ ॥ उपमानादपि तत्सिद्धिमभिधातुमाह–'हृद्गते'त्यादि, हृद्गताशेषसंशीतिनिर्णयात् सकाशात् 'तद्ग्रहे' सर्वज्ञग्रहे सति पूर्वं पुनरुपमा–उपमानं प्रवर्त्तते 'अन्यग्रह इति' तथाविधान्योपलब्धौ सत्यां 'तत्र' गृहीते सर्वज्ञे, अनेन सदृशोऽसावित्येवमुपमानं, न चान्यत्रापि च गोगवयादावन्यथेति, अन्यथोपमानासंभवः, उभयदर्शनाभावाद् ॥ ५९५ ॥ अर्थापत्त्यापि तद्ग्रहं प्रतिपादयितुमाह–'शास्त्रे'त्यादि, 'शास्त्रात्' वेदात् 'अतीन्द्रियगतेः' धर्मादिपरिच्छेदात् अर्थापत्त्याऽपि परमार्थनीत्या गम्यते सर्वज्ञो, नहि तद्वाच्यवाचकभावसाक्षात्कारिव्यतिरेकेण सम्यक् शास्त्रादतीन्द्रियार्थगतिरित्यर्थात्तत्सिद्धिरिति, इत्थं चैतदङ्गीकर्त्तव्यम्, अन्यथा 'तत्र' अतीन्द्रियार्थे नाश्वासः–इदमित्थमेवेत्येवं 'छद्मस्थस्य' प्रमातुरुपजायते, व्यभिचारसम्भवादिति ॥ ५९६ ॥ यतश्चैवमतः–'प्रमाणे'त्यादि, 'प्रमाणपञ्चकावृत्तिः' भावोपलम्भकप्रमाणपञ्चकावर्त्तनं 'एवम्' उक्तेन प्रकारेण 'तत्र' सर्वज्ञे 'न युज्यते' न घटते, 'तथापि' एवमपि व्यवस्थिते अभावप्रामाण्यं तत्रेति 'ध्यान्ध्यविजृम्भितम्' अज्ञानविलसितमेतत् ॥ ५९७ ॥ एवं सर्वज्ञं प्रसाध्य परोदितं धर्माधर्मव्यवस्थानिमित्तं विचारयति—'वेदा'दित्यादिना–वेदाद्धर्मादिसंस्थाऽपि पुरोदिता हन्त 'अतीन्द्रियदर्शिनं' प्रमातारं विहाय गम्यते 'सम्यक्' यथावत् कुतः एतत्, विचिन्त्यतामिदमिति ॥ ५९८ ॥ एतदेव भावयति–'न वृद्धे'त्यादिना–न वृद्धसंप्रदायेनैव वेदाद्धर्मादिसंस्था ज्ञायते, कुतः? इत्याह–'छिन्नमूलत्वयोगतः' आदावेव तत्त्वतः केनचिदज्ञानात् न 'अर्वाग्दर्शिना' छद्मस्थेन प्रमात्रा 'तत्र' वेदस्य 'अतीन्द्रियार्थः' धर्मादिप्रतिपादनशक्तिलक्षणः 'अवसीयते' ज्ञायते ॥ ५९९ ॥ ततश्च–

न चाप्यतीन्द्रियार्थस्वाज्यायो विषयकल्पनम् । असाक्षाद्दर्शिनस्तत्र, रूपेऽन्धस्येव सर्वथा ॥ ६२५ ॥
सर्वज्ञेन ह्यभिव्यक्तात्सर्वार्थादागमात्परा । धर्माधर्मव्यवस्थेय, युज्यते नान्यत क्वचित् ॥ ६२६ ॥

'अत्रापि' सर्वज्ञनिषेधाधिकारे श्रूयते केचिदित्यमेव सर्वज्ञवादिन' जैनादय–प्रमाणपञ्चकावृत्ति' प्रतीता कथ 'तत्र' सर्वज्ञे उपपद्यते?, नैवेति भावः ॥ ५११ ॥ एतदेवाह–'सर्वार्थे'त्यादिना–प्रत्यक्ष सर्वार्थविषयमसर्वार्थविषयं वेति चेदस्ति समाधायाह–'सर्वार्थविषय' सर्वार्थपरिच्छेदक तद्येत्, तत्प्रत्यक्षं प्रमाण, 'तन्निषेधकृत्' सर्वज्ञनिषेधकरणशीलम्, मत्रोत्तरम्–अभावः कथम् 'एतस्य' सर्वज्ञस्य?, तथाविधप्रत्यक्षवत एव सर्वज्ञत्वात्, न चेत्सर्वविषयं प्रत्यक्ष तन्निषेधकृ दिति, अत्र समाधिः–अत्रापि 'अत' समम्' एतदुक्त्यं, यदुताभावः कथम्?, एतस्य निषेधस्य सर्वत्र प्रवृत्तेः सतोऽप्यग्रह णादिति ॥ ५१२ ॥ एव प्रत्यक्षमबाधकम्, अनुमानं तु साधकमेवेत्याह 'धर्माद्य' इत्यादिना–धर्मादयोऽपि च ये परस्य चोदनागम्या स्वतन्त्रसिद्धा वा अजीवकाया इत्येते धर्मिणः, 'अध्यक्षा' प्रत्यक्षा इति साध्यो धर्मः, 'ज्ञेयभावात्' ज्ञेयत्वादिति हेतुः, घटादिवदिति दृष्टान्तः, सामान्येनाभिधीयमाने प्रत्यक्षादिविरोधिनी प्रतिज्ञेत्यत आह–'कस्यचित्' केच स्मिन् एव, न सर्वस्य, तेऽप्यपरैः सर्वज्ञवादिभिः केवला एवेष्यन्ते, 'दूरं पश्यति वा मे'त्यादिवचनादित्यत आह–सर्व एव, टीका(कीटा)दयोऽपि, इत्येव नानुमान न विद्यते सर्वज्ञे, किन्तु विद्यत एव ॥ ५१३ ॥ आगमादपि तत्सिद्धिरित्याह– 'आगमा'दित्यादि, आगमादपीति–आगमाख्यात्प्रमाणात् 'तत्सिद्धि' सर्वज्ञसिद्धिः, कथमित्याह–यत् 'असौ' सर्वज्ञः

विशेषे घृतादि प्रक्षिपेत् स्वर्गकामः पुमान्, इत्येवंभूतायां श्रुतौ "स्वादेत् श्वमांसं स्वर्गकामः" इत्येष नार्थः किं?, तर्हि भव-
दभिप्रेत एवेत्यत्र का प्रमा?, न किञ्चित्प्रमाणमित्यर्थः ॥ ६०५ ॥ पराभिप्रायमाशङ्क्य परिहरति-'प्रदीपे'त्यादि, 'प्रदीपा-
दिवत्' प्रदीप(सा)मान्यादिवत् इष्टश्चेत् 'तच्छब्दः' श्रुतिशब्दः 'अर्थप्रकाशकः' स्वार्थवाचकः स्वत एव, तत्स्वाभाव्यात्,
एतदाशङ्क्याह-प्रमाणं न किञ्चित्-प्रत्यक्षादि 'अत्रापि' एवंभूतस्वभाववादे विद्यते तत्र, अतीन्द्रियत्वादस्य ॥ ६०६ ॥
अत्रैव दोषान्तरमाह-'विपरी'त्यादिना-विपरीतप्रकाशश्च अर्थान्तरवाचकत्वं चेति भावः ध्रुवमापाद्यते 'क्वचित्' विषया-
न्तरे, प्रदीपादिदृष्टान्तेन, एतदेवाह-तथाहि 'इन्दीवरे' नीलोत्पले दीपः प्रकाशयति रक्ततां, तथोपलब्धेः, एवं-चन्द्रः
पीतवाससि शुक्लतामिति ॥ ६०७ ॥ दोषान्तरमाह-'तस्मा'दित्यादिना-'तस्मात्' श्रुतिपदान्न चाविशेषेण प्रदीपादिवत्
रूपादौ प्रतीतिरुपजायते, इष्टवाच्यविषयादिना, सङ्केते सत्युपजायत इति चेदत आह-सङ्केतसव्यपेक्षत्वे, प्रतीतौ कर्त्त-
व्यायामभ्युपगम्यमाने, किमित्याह-'स्वत एवेत्ययुक्तिमत्' यदुक्तं शब्दोऽर्थप्रकाशकः स्वत एव, तदशोभनमित्यर्थः॥६०८॥
किञ्च-'साधु'रित्यादि, साधुः यथार्थो नवेत्ययथार्थो वा सङ्केत इति च नाशङ्केवंभूता निवर्त्ततेऽत्रेति, तथा 'तद्वैचित्र्यो-
पलब्धेश्च' सङ्केतवैचित्र्यदर्शनाच्च, कुतः? इत्याह—'स्वाशयाभिनिवेशतः' तथा तथा व्याख्याभावात् ॥ ६०९ ॥ न
चेयमपौरुषेयीत्याह—'व्याख्ये'त्यादि, व्याख्याऽप्यपौरुषेयी स्मृता केवलजैमिन्यादिभिरिति 'अस्य' वेदस्य, मानाभावा-
त्कारणासत्त्व स्मरणकरणयोः, 'न सङ्गता' न युक्ता, 'मिथः' परस्परं विरुद्धभावाच्च, साङ्ख्यादिभिरन्यथा व्याख्यायमान-
त्वात्, तदसाधुत्वाद्यनिश्चितेः, व्याख्यासाधुत्वकल्पितत्वाद्यनवगमादित्यर्थः ॥ ६१० ॥ एतदेवाभिधातुमाह-'नान्य'इ-

'प्रामाण्य'मित्यादि, 'प्रामाण्य रूपविषये' नीलपीतविषये नीलपीतादिव्यवस्थाकारिणि सम्प्रदाये कथञ्चित्प्रवृत्तेऽपि 'न युक्तिमत्' न घटमानकं प्रामाण्यं यथा, केषामित्याह–'अनादिमदन्धानाम्' सदा जात्यन्धानां, तुल्य(तत्रा)संभवात्, तथा 'अत्रापि' वेदार्थधर्मादिसंस्थायाः सम्प्रदाये निरूप्यतां, यत्पुनः प्रामाण्यं न युक्तिमदिति ॥ ६०० ॥ लौकिकपदार्थतुल्यतया प्रसिद्धमर्थार्थस्यमेव वेदपदानाम्, अतो नात्र व्याख्यानामकल्पनेत्याशङ्क्याह–'न लौकिके'त्यादि, न 'लौकिकपदार्थेन' अप्रमाणिना सह तत्पदार्थस्य 'तुल्यता' एकत्वं निश्चेतु पार्यते स्वतन्त्रनीत्या परेण, कुतः? इत्याह–'अन्यत्र' नित्यत्वादौ 'तद्विपर्ययभावतः' लौकिकपदतुल्यताविपर्ययभावात् ॥ ६०१ ॥ एतदेवाह–'नित्यत्वे'त्यादिना–'नित्यत्वापौरुषेयत्वादि' नित्यत्वमपौरुषेयत्वमतीन्द्रियार्थाभिधायकत्वमित्यादि अस्ति किञ्चित् 'अलौकिकं' लोकातीतं 'तत्र' वेदे, एतच्चैवम् 'अन्यत्रापि' पदार्थादौ 'अतः' अस्मात्कारणात् शङ्का–किं लौकिकपदार्थतुल्य एवास्यार्थः किं वा नित्यत्वादिवद्विलक्षण इत्येवम्भूता 'विदुषः' पण्डितस्य (न) निवर्तते, शङ्कानिवृत्तौ सदुपायाभावात् ॥ ६०२ ॥ अत्रोपचयमाह–'तन्निवृत्त्या'वित्यादिना–'तन्निवृत्तौ' यथोदितशङ्कानिवृत्तौ न चोपायोऽन्यः कश्चिद् विना 'अतीन्द्रियवेदिनं' प्रमातारं, स च वो नास्ति, एवं च कृत्वा सा ध्वनितं धर्मस्याप्य कीर्तितं धर्मकीर्तिना आचार्येण ॥ ६०३ ॥ यदुत–'स्वय'मित्यादि, 'स्वयम्' आत्मना रागादिमान् पुरुषः नार्थं 'वेत्ति' जानाति, वेदस्यापौरुषेयत्वात्, न 'अन्यतः' अन्यस्मात् पुरुषात्, तस्यापि रागादिमत्त्वात्, 'न वेदयति' न ज्ञापयति वेदोऽपि, भो ब्राह्मण! ममायमर्थः इत्येवम्, अप्रतीतेः, एवं च सति 'वेदार्थस्य' अग्निहोत्रादेः कुतो 'गतिः' परिच्छित्तिः?, नैव ॥६०४॥ एतच्चैवम्–'तेने'त्यादि, तेनाग्निहोत्र जुहुयात्–भूत

इत्येष नार्थः किं?, तर्हि भव-
विशेपे घृतादि प्रक्षिपेत् स्वर्गकामः पुमान्, इत्येवंभूतायां श्रुतौ "स्वादेत् श्वमांसं स्वर्गकामः" इत्येष नार्थः किं?, तर्हि भव-
दभिप्रेत एवेत्यत्र का प्रमा?, न किञ्चित्प्रमाणमित्यर्थः ॥ ६०५ ॥ पराभिप्रायमाशङ्क्य परिहरति—'प्रदीपे'त्यादि, 'प्रदीपा-
दिवत्' प्रदीप(सा)मान्यादिवत् इष्टश्चेत् 'तच्छब्दः' श्रुतिशब्दः 'अर्थप्रकाशकः' स्वार्थवाचकः स्वत एव, तत्स्वाभाव्यात्,
एतदाशङ्क्याह—प्रमाणं न किञ्चित्—प्रत्यक्षादि 'अत्रापि' एवंभूतस्वभाववादे विद्यते तत्र, अतीन्द्रियत्वादस्य ॥ ६०६ ॥
अत्रैव दोपान्तरमाह—'विपरी'त्यादिना—विपरीतप्रकाशश्च अर्थान्तरवाचकत्वं चेति भावः ध्रुवमापाद्यते 'क्वचित्' विषया-
न्तरे, प्रदीपादिदृष्टान्तेन, एतदेवाह—तथाहि 'इन्दीवरे' नीलोत्पले दीपः प्रकाशयति रक्ततां, तथोपलब्धेः, एवं—चन्द्रः
पीतवाससि शुक्लतामिति ॥ ६०७ ॥ दोषान्तरमाह—'तस्मा'दित्यादिना—'तस्मात्' श्रुतिपदान्न चाविशेषेण प्रदीपादिवत्
रूपादौ प्रतीतिरुपजायते, इष्टवाच्यविषयादिना, सङ्केते सत्युपजायत इति चेदत आह—सङ्केतसव्यपेक्षत्वे, प्रतीतौ कर्त्त-
व्यायामभ्युपगम्यमाने, किमित्याह—'स्वत एवेत्ययुक्तिमत्' यदुक्तं शब्दोऽर्थप्रकाशकः स्वत एव, तदशोभनमित्यर्थः॥६०८॥
किञ्च—'साधु'रित्यादि, साधुः यथार्थो नवेत्ययथार्थो वा सङ्केत इति च नाशङ्कैवंभूता निवर्त्ततेऽत्रेति, तथा 'तद्वैचित्र्यो-
पलब्धेश्च' सङ्केतवैचित्र्यदर्शनाच्च, कुतः? इत्याह—'स्वाशयाभिनिवेशतः' तथा तथा व्याख्याभावात् ॥ ६०९ ॥ न
चेयमपौरुषेयीत्याह—'व्याख्ये'त्यादि, व्याख्याऽप्यपौरुषेयी स्मृता केवलजैमिन्यादिभिरिति 'अस्य' वेदस्य, मानाभावा-
त्कारणात्स्मरणकरणयोः, 'न सङ्गता' न युक्ता, 'मिथः' परस्परं विरुद्धभावाच्च, साङ्ख्यादिभिरन्यथा व्याख्यायमान-
त्वात्, तत्साधुत्वाद्यनिश्चितेः, व्याख्यासाधुत्वकल्पितत्वाद्यनवगमादित्यर्थः ॥ ६१० ॥ एतदेवाभिधातुमाह—'नान्य'इ-

त्यादि, 'नान्यप्रमाणसंवादात्' न प्रत्यक्षादिप्रमाणसंवादेन, तद्गोचरगतेनेति गम्यते, 'तत्साधुत्वविनिश्चय' व्याख्या साधुत्वविनिश्चयः, यदुतेयं शोभना व्याख्या नत्वियमित्येवंरूपः, कुतः ? इत्याह-'स' अन्यप्रमाणसंवादः अतीन्द्रिये व्याख्यागोचरे वस्तुनि 'न यन्न्यायः' न यस्माद् युक्त्युपपन्नः, कुत इत्याह-'तत्तद्भावविरोधतः' तस्य—अतीन्द्रियस्य व्याख्याविषयस्य तद्भावविरोधतः, अन्यप्रमाणप्रवृत्तावतीन्द्रियत्वविरोधादित्यर्थः ॥ ५११ ॥ यतश्चैवम्—'तस्मा'दित्यादि, तस्माद् 'व्याख्यानम्' अर्थप्रकाशनम् 'अस्य' वेदस्य 'इदं' प्रयदभिमतं, किमित्याह-'स्वाभिप्रायनिवेदनं' तत्त्वतो निजाभिप्रायकथनं, कस्येत्याह-'जैमिन्यादेः' व्याख्यानकर्तुः, यदा चैव तदा 'न तुल्य किं' न सदृशं किं ?, केन ? इत्याह-वचनेन अपरेण बुद्धवचनादिना 'वः' युष्माकं, तुल्यमेव, स्वाभिप्रायनिवेदनाविशेषादिति भावः ॥ ५१२ ॥ 'एष' इत्यादिना, एषः 'स्थाणु' काष्ठविशेषः अथ मार्गं इति सुगमादेः 'ब्रवीति' वक्तीत्येवं वक्ता कश्चन, वक्ता अन्यः पुनः स्वयं ब्रवीमि यदुतायं मार्गः इत्येवं वक्ति, 'तयोः' द्वयोरपि वक्त्रोः भेदः परीक्ष्यतां, स्वाभिप्रायनिवेदनं प्रति न कश्चिद्भेदः, अज्ञाम्येवैको योऽसंभवित्प्रत्यारोपमाह ॥ ५१३ ॥ प्रस्तुत एव दोषान्तरमाह-'न चापी'त्यादिना—न चाप्यपौरुषेयः 'असौ' वेदः घटते 'सूपपत्तितः' सुयुक्त्या, कुतः ? इत्याह-'वक्तृव्यापारवैकल्ये' वक्तृताल्वादिव्यापारा भावे 'तच्छब्दानुपलब्धितः' वेदशब्दानुपलब्धेरिति ॥ ५१४ ॥ पराभिप्रायमाशङ्क्य परिहरति-'वक्ती'त्यादिना-वक्तृ व्यापारभावेऽपि तल्लक्षणे 'तद्भावे' अपौरुषेयत्वे लौकिकं न किम् ?, अपौरुषेयमिष्टं वो वचनं ग्रन्थस्यापेक्षया, तत्र हि ग्रन्थान्यपौरुषेयाण्येवेति गर्भः ॥ ५१५ ॥ अभ्युपगम्य दोषान्तरमाह-'दृश्ये'त्यादिना, दृश्यमानेऽपि च श्रूयमाणेऽपि च

वक्तृव्यापारवैकल्ये वेदशब्दे आशङ्का 'अदृश्यकर्तृसमुद्भवा' पिशाचकर्तृविषया न निवर्त्तते, प्रेक्षापूर्वकारिण इति योगः,
किं न निवर्त्तत एव ?, नेत्याह, अतीन्द्रियार्थद्रष्टारमन्तरेण, यदि त्वसौ भवति ततस्तद्वचने निवर्त्तत इति ॥ ६१६ ॥
परामिप्रायमाशङ्क्य परिहरन्नाह–'पापादि'त्यादि, पापात् कर्मणः 'अत्र' वेदे 'ईदृशी बुद्धिः' विकल्पबुद्धिः, एतदाश-
ङ्क्याह–'न पुण्यात्' न पुण्येनेदृशी बुद्धिरिति ?, 'न प्रमा' नात्र प्रमाणं, लोकः प्रमाणमित्याशङ्क्याह–'न लोको हि' न लोक
एवात्र प्रमाणं, कुतः इत्याह–विगानत्वात्, वेदापौरुषेयत्वं प्रति यद्यपि विगानं तथाऽपि बहवोऽस्मत्पक्ष एवेत्याशङ्क्याह–
तद्बहुत्वाद्यनिश्चितेः, सर्वस्यादर्शनादिति ॥ ६१७ ॥ किञ्च–'बहूना'मित्यादि, बहूनामपि प्रमातृणां संमोहभावात्,
कुतश्चिद्धेतोः तत एव मिथ्याप्रवर्त्तनात्, पारसीकवन्मातृविवाहे, तथा मान(संख्या)विरोधाच, लोकमानत्वे सप्तमाना-
पत्त्या कथमित्थमिदं ननु यदुत "पापादत्रेदृशी बुद्धि" रित्यादि ॥ ६१८ ॥ एवं त्विदं भवेदपीत्याह–'अतीन्द्रिये'त्यादि,
अतीन्द्रियार्थद्रष्टा तु सर्वज्ञ इत्यर्थः पुमान् कश्चिद्यदीष्यते ऋषभोऽन्यो वा, ततः किमित्याह–संभवद्विषयाऽपि स्यात्,
तदुपदेशज्ञानसामर्थ्येन, एवंभूताऽर्थकल्पना–यदुत "पापादत्रेदृशी बुद्धि"रित्यादि ॥ ६१९ ॥ दोषान्तराभिधित्सयैतदेवाह
–'अपौरुषेयते'त्यादिना–एवमुक्तन्यायाद् अपौरुषेयताऽपि 'अस्य' वेदस्य नान्यतो ह्यवगम्यते, किन्त्वित एव सर्वज्ञात्,
ननु चात्र हेतवः सन्तीत्येतदाशङ्क्याह–कर्त्तुः असमरणादीनां वक्ष्यमाणानां 'व्यभिचारादिदोषतः' अनैकान्तिकासिद्ध-
त्वदोषादिति ॥ ६२० ॥ एतदेवाह–'नाभ्यासे'त्यादिना, 'ने'ति प्रतिषेधः, अभ्यासः कर्मणां सत्यमुत्पादयति कौशलम् ।
धात्राऽपि तावदभ्यस्तं, यावत्सृष्टा मृगेक्षणा ॥ १ ॥ अन्ये तु पश्चार्द्धमन्यथा पठन्ति–"मिथ्या तत् तादृशी येन, न धात्रा

निर्मिताऽपरा ।" इति, एवमादीनामपि कर्त्ता 'विगानतः' सकललोकैकवाक्यतया स्मर्यते, न अविगानेन स्मर्यत इत्याह
-स्मर्यते च विगानेन, अनेकवाक्यतया, हन्त 'इहापि' वेदे 'अष्टकादिकाः' अष्टकाद्यासकत्या(ष्टा)विरिति ॥ ६२१ ॥
एवं चापौरुषेयो वेदः कर्तुरस्मरणादावशक्यविस्यसाधनं, तथा आद्यभिमत हिरण्यगर्भवेदाध्ययनं गुरुमुखाधीतवेदाध्ययन
पूर्वकं वेदाध्ययनत्वादिदानींतनवेदाध्ययनवदित्येतदप्यसाधनमेवेत्यभिधातुमाह–'सकृते'त्यादि, 'सकृताध्ययनस्यापि'
स्वरचितपाठस्यापि 'तद्भावः' अध्ययनभावो न विरुध्यते, तथादर्शनादिति । कृता(कर्त्र)पलापे कारणमाह–गौरवापा
दनार्थं च प्रस्तुतमस्य स्यादनिवेदनं, यथुत मत्कृतोऽयं, लोकानां तथारूढत्वात्, अत एतदप्यसाधनमेव ॥ ६२२ ॥
तथाऽन्योऽपि हेतुरपौरुषेयत्वे मन्त्रसामर्थ्यदर्शनादित्ययमप्यसुन्दर इति प्रतिपादयन्नाह–'मन्त्रादि'त्यादि, मन्त्रादीनां च
सामर्थ्यं विषापहरणादौ 'शाबराणामपि' पौरुषेयाणामपि 'स्फुट' प्रतीतं, सर्वलोकेऽपि तथा व्यवहारदर्शनात् । दोषा
न्तरमाह–न चाप्यव्यभिचारि तत्सामर्थ्यं, क्वचित्प्रयोगेऽपि फलादर्शनादिति ॥ ६२३ ॥ सर्वज्ञसिद्ध्यधिकारे श्रुतिपरीक्षाग
तेति तेनैवोपसंहरन्नाह–'वेदेऽपी'त्यादि, वेदेऽपि पठ्यते ह्येषः–सर्वज्ञो महात्मा तत्र तत्र यथा 'सर्वविद्यस्यैषे'त्यादौ 'यत्'
यस्मात् 'स च' वेदः मानं भवताम्, अतोऽपि 'अस्य' सर्वज्ञस्य असत्त्वं वक्तुं न युज्यते, न्यायादिति ॥ ६२४ ॥ न चे
हार्थवादादिकल्पनया परिहारविषयकल्पनं युक्तमित्येतदाह–'न चापी'त्यादि, न चापि 'अतीन्द्रियार्थत्वात्' साक्षात्त
दर्शनात् 'उपायः' शोभनं 'विषयकल्पनम्' अर्थवादादि, कस्येत्याह–'असाक्षाद्दर्शिनः' छद्मस्थस्य 'तत्र' वेदे,
निदर्शनमाह–'रूपे' नीलादिविषये कल्पनमन्धस्येव, न योग्यः सर्वथा जात्यन्धोऽन्धयस्यास्य ॥ ६२५ ॥ प्रकृतमुपसंहरति–

'सर्वज्ञेने' त्यादिना–'सर्वज्ञेन हि' सर्वज्ञेनैव 'अभिव्यक्तात्' प्रकाशितात् 'सर्वार्थात्' सर्वविषयात् आगमात्परा नान्या इति, केत्याह–'धर्माधर्मव्यवस्था' एवं धर्म्म एवमधर्म्म इति नीतिः इयं युज्यते, यथोक्तमस्माभिः, नान्यतः प्रमाणात् कचिद्–भुवनेऽपि ॥ ६२६ ॥ वार्त्तान्तरमाह–'अत्रापी'–त्यादिना—

अत्रापि प्राज्ञ इत्यन्य, इत्थमाह सुभाषितम् । इष्टोऽयमर्थः शक्येत, ज्ञातुं सोऽतिशयो यदि ॥६२७॥
अयमेवं नवेत्यन्यदोषो निर्दोषताऽपि वा । दुर्लभत्वात्प्रमाणानां, दुर्बोधेत्यपरे विदुः ॥ ६२८ ॥
अत्रापि ब्रुवते वृद्धाः, सिद्धमव्यभिचार्यपि । लोके गुणादिविज्ञानं, सामान्येन महात्मनाम् ॥ ६२९ ॥
तन्नीतिप्रतिपत्त्यादेरन्यथा तन्न युक्तिमत् । विशेषज्ञानमप्येवं, तद्वदभ्यासतो न किम् ? ॥ ६३० ॥
दोषाणां ह्रासदृष्टयेह, तत्सर्वक्षयसम्भवात् । तत्सिद्धौ ज्ञायते प्राज्ञैस्तस्यातिशय इत्यपि ॥ ६३१ ॥
हृद्गताशेषसंशीतिनिर्णयादिप्रभावतः । तदात्वे वर्त्तमाने तु, तद्व्यक्तार्थाविरोधतः ॥ ६३२ ॥
न चास्यादर्शनेऽप्यद्य, साम्राज्यस्येव नास्तिता । सम्भवो न्याययुक्तस्तु, पूर्वमेव निदर्शितः ॥ ६३३ ॥
प्रातिभालोचनं तावदिदानीमप्यतीन्द्रिये । सुवैद्यसंयतादीनामविसंवादि दृश्यते ॥ ६३४ ॥
एवं तत्रापि तद्भावे, न विरोधोऽस्ति कश्चन । तद्व्यक्तार्थाविरोधादौ, ज्ञानभावाच्च साम्प्रतम् ॥ ६३५ ॥

सर्वत्र दृष्टे संवादाददृष्टे नोपजायते । ज्ञातुर्विसंवादाशङ्का, तद्देशिक्ष्योपलब्धित ॥ ६३६ ॥
वस्तुस्थित्याऽपि तत्तादृग्, न विसंवादक भवेत् । यथोत्तर तथादृष्टेरिति चैतन्न साम्प्रतम् ॥ ६३७ ॥
सिद्ध्येत्प्रमाण यद्येवमप्रमाणमथेह किम् ? । नह्येकं नास्ति सत्यार्थं, पुरुषे बहुमापिणि ॥ ६३८ ॥
यत एक न सत्यार्थं, किन्तु सर्वं यथाश्रुतम् । यत्रागमे प्रमाण स, इष्यते पण्डितैर्जैने ॥ ६३९ ॥
आत्मा नामी पृथक् कर्म, तत्संयोगाद्भवोऽन्यथा । मुक्तिर्हिंसादयो मुख्यास्तन्निवृत्तिः ससाधना ॥ ६४० ॥
अतीन्द्रियार्थसंवादो, विशुद्धो भावनाविधि । यत्रेदं शुध्यते सर्वं, योगिव्यक्त स आगम ॥ ६४१ ॥
अधिकार्यपि चास्येह, स्वयमज्ञो हि यः पुमान् । कथितज्ञः पुनर्धीमांस्तद्धेयर्थ्यमतोऽन्यथा ॥ ६४२ ॥
परचित्तादिधर्माणां, गत्युपायाभिधानत । सर्वार्थविषयोऽप्येष, इति तन्नावसंस्थिति ॥ ६४३ ॥

'अत्रापि' अनन्तरोदितवार्तायां प्राक्ः 'इति' असमाद्धेतोः 'अन्यः' सौगतः 'इत्थ' वक्ष्यमाणनीत्याऽऽह, सुभाषित मित्युपहसति, इष्टोऽयमर्थः—यदुत सर्वज्ञेन ह्यभिव्यक्तादित्यादि शक्यते ज्ञातुं, सोऽतिशयो यदि, अयं सर्वज्ञः अयं तद मिथ्यार्थः आगम इत्येवंरूपः, स तु न शक्यत इत्यभिप्रायः ॥ ६२७ ॥ परमतमुपन्यस्यन्नाह—'अथ'मित्यादि, अयमेवं— साधुः विद्वान् सर्वविद्वान् भवेति—नासाधुर्नाविद्वान्नासर्वज्ञ इत्येवमन्यदोषः सम्यानान्तरवर्त्तिनः, निर्दोषत्वाऽपि वा (न)

इत्यपरे विदुः—अन्ये त्वेवं जानन्ति
तत्रैव, किमित्याह—'दुर्लभत्वात्प्रमाणानां' परचेतसामप्रत्यक्षत्वात् 'दुर्बोधा' दुर्ज्ञाना, इत्यपरे विदुः आगमवादिनः, किमि-
॥ ६२८ ॥ वार्त्तान्तरमभिधातुमाह—'अत्रापी'त्यादि, 'अत्रापि' अनन्तरोदितविचारे ब्रुवते वृद्धाः आगमवादिनः, किमि-
त्याह—'सिद्धं' प्रतिष्ठितम् 'अव्यभिचार्यपि' नियमवदपि लोके गुणदोषविज्ञानम्, अन्यत्र कथमित्याह—सामान्येन
प्रज्ञया न साक्षात्कारेण 'महात्मनां' प्राज्ञानामित्यर्थः ॥ ६२९ ॥ एतदेव दर्शयितुमाह—'तन्नीती'त्यादि, 'तन्नीतिप्रति-
पत्त्यादेः' दिग्नागाचार्यनीतिप्रतिपत्तेः सम्यगुद्योतनात् सामान्येन यद्गुणज्ञानं सिद्धं तन्नीत्या जातकस्य, 'अन्यथा' यद्येवं
नेष्यते ततः 'तत्' नीतिप्रतिपत्त्यादि न युक्तिमत्, अप्रेक्षापूर्वकारिनीतित्वेन, एवं सामान्येन गुणज्ञानं सिद्धमित्याह,
विशेषज्ञानमप्येवं गुणादिविषयमन्यत्र 'तद्वत्' सामान्यवद् अभ्यासतो न किं?, भवत्येवेत्यभिप्रायः ॥ ६३० ॥ एतदे-
वाह—'दोषाणा'मित्यादि, 'दोषाणां' रागादीनां ह्रासदृष्ट्येह प्रतिपक्षबलेन लोके 'तत्सर्वक्षयसम्भवात्' तेषां—रागा-
दीनां सर्वक्षयोपपत्तेः, प्रतिपक्षोत्कर्षेण, 'तत्सिद्धौ' सामान्येन गुणवत्पुरुषसिद्धौ ज्ञायते 'प्राज्ञैः' तदुक्तपरीक्षाक्षमैः 'तस्य'
गुणवत्पुरुषस्य 'अतिशय इत्यपि' विशेषोऽपीति भावः ॥ ६३१ ॥ यथा ज्ञायते तथाऽभिधातुमाह—'दृष्टे'त्यादि, दृष्ट-
अशेषसंशयनिश्चयप्रभावेन, आदिशब्दादन्यत्र दृष्टेष्टाविरुद्धोक्तिसामर्थ्येन च, तदात्वे द्वयादप्यतो ज्ञायते तस्यातिशयः,
वर्त्तमाने तु' साम्प्रतं पुनः 'तद्व्यक्तार्थाविरोधतः' तेन गुणवताऽभिव्यक्तो य आगमस्तदर्थाविरोधेन केवलेनेति
॥ ६३२ ॥ एवंभूतोऽपीदानीं न दृश्यतेऽतो नास्त्येवेत्याशङ्कानिवृत्त्यर्थमाह—'नचे'त्यादिना—न च 'अस्य' अशेषसंशय-
साम्प्रतं साम्राज्यस्येव नास्तिता, किन्त्वस्तितैव, नहीदानीं साम्राज्यमपि दृश्यते, तथा च
[illegible] 'अद्य' साम्प्रतं

तदस्तीति। स्यादेतत्-संभयति तदित्यत्राह-सम्भवोऽस्येति वर्तते न्याययुक्त एव भणितप्रकारेण, पूर्वमेव 'दोषाणां ह्रासे'त्यादिना निदर्शित इति समानमेतत् ॥ ११३ ॥ अस्यैव ज्ञानसम्भवमाह-'प्रातिभे'त्यादिना-प्रातिभालोचन तावद् व्याध्यादिपरिणामविषयमिदानीमपि अतीन्द्रिये व्याध्यादिपरिणाम एव सुवैद्यसंयतादीनां महाप्राज्ञाना केषाञ्चित् अविसंवादि दृश्यते अर्थक्रियाद्वारेणेति ॥ ११४ ॥ दृष्टान्तमभिधाय दार्ष्टान्तिकयोजनामाह-'एव'मित्यादिना-एवं यथा सुवैद्यानां 'तथापि' गुणवत्पुरुषे 'तद्भावे' तद्विशिष्टचेष्टोपलब्ध्या प्रातिभगुणालोचनभावे न विरोधोऽस्ति कश्चन, अस्य साक्षाद्दर्शिनोऽपि यथाय संभवस्येतदित्यर्थः। तथा तद्रूपकार्याविरोधावो तेन-गुणवता व्यक्तो च आगमः तदर्था विरोधसम्भवात् व्यासस्वादादी विषये 'ज्ञानभावाच' ज्ञानोत्पत्तेश्च कारणात् साम्प्रतमिदानीं, न विरोधोऽस्ति कश्चन इत्यनुवर्तते ॥ ११५ ॥ यदि नाम दृष्टे संवादः अदृष्टे किमायातमित्याशङ्कापोहायाह-'सर्वत्रे'त्यादिना-सर्वत्र दृष्टे, तत्र कार्ये, तथावादेसो 'अदृष्टे' धर्मादौ 'नोपजायते' न प्रवर्तत एव 'ज्ञातु' प्राज्ञस्य 'विसंवादाशङ्का' किमित्यमन्यथा वा? इति, कुतः? इत्याह-'तद्विशिष्टोपलब्धितः' तस्य-व्यञ्जकस्य वा व्यक्तस्य वा सा प्राप्यस्याद्युपायाभिधानाद्विशेषिष्टो-पलब्धेः (०ब्धितत) ॥ ११६ ॥ प्रातिभेन यदि नाम नोपजायते तथाऽपि वस्तुस्थित्यां तत्प्रातिभ विसंवादकं स्या दित्याशङ्कानिवृत्त्यर्थमाह-'वस्तु'त्यादि, 'वस्तुस्थित्यापि' परमार्थेनापि तत्तादृक्, प्रातिभ मार्गानुसारि, न विसंवादकं भवेत्, किन्त्वविसंवादकमेव, कुतः? इत्याह-यथोत्तर क्रियाप्रवृत्तौ 'तथादृष्टेः' सुवैद्यप्रातिभवदविसंवादकत्वेन दृष्टेः। 'इति च' एवं च सति 'एतत्' वक्ष्यमाणं 'न साम्प्रत' न शोभनम् ॥ ११७ ॥ किं तदित्याह-'सिद्धेर्वि'त्यादि,

यद्येवमेकवाक्यार्थसंवादित्वेन अप्रमाणमथेह किं ?, नैवं सन्ति किञ्चिदप्रमाणं नाम, सर्वं
सिद्ध्येत् प्रमाणम्–आगमाख्यं यद्येवमेकवाक्यार्थसंवादित्वेन वाक्यं, किन्तु किञ्चिद्वदत्यपि, पुरुषे बहुभाषिणि, घुणा-
पौरुषेयवचनं प्रमाणं, कुतः ? इत्याह–नह्येकं नास्ति सत्यार्थं वाक्यं, किन्तु किञ्चिद्वदत्यपि, पुरुषे बहुभाषिणि, घुणा-
क्षरवदिति सर्वेषां तद्वचनं प्रमाणमिति महाननर्थः ॥ ६३८ ॥ यथैतदसाम्प्रतं तथाऽभिधातुमाह–'यत एक'मित्यादि,
'यतः' यस्मादेकं न सत्यार्थं, घुणाक्षरन्यायेन, किन्तु सर्वमेव यथाश्रुतं यत्रागमे इत्थम्भूत आगमो, न वचनमात्रं,
'इष्यते' अभ्युपगम्यते, कैः ? इत्याह–पण्डितैर्जैनैः, मान्यते, आमुष्मिकसिद्धेरिति, तत्त्वज्ञैः ॥ ६३९ ॥ स चेत्थम्भूत
इत्याह–'आत्मे'त्यादिना–आत्मा नामी नारकादिरूपेण परिणामवान्, तथा पृथक्कर्म आत्मनो, वस्तुसत्त्वात्, 'तत्सं-
योगात्' कर्मसम्बन्धात् 'भवः' संसारः, 'अन्यथा मुक्तिः' वस्तुसत्कर्मवियोगान्मोक्षः । तथा 'हिंसादयो' हिंसानृता-
दयः कर्मसंयोगहेतवः 'मुख्याः' कथञ्चित्तत्क्रियाभाववाच्याः, तथाभणनादिति, निरुपचरिता इत्यर्थः, 'तन्निवृत्तिः'
हिंसादिनिवृत्तिर्मुख्या ससाधना, सदुपदेशक्षयोपशमादिना निमित्तेन ॥ ६४० ॥ तस्यैव गुणदोषमाह–'अतीन्द्रिये'–
त्यादिना–'अतीन्द्रियार्थसंवादः' चन्द्रोपरागनिमित्तादिसंवादः विशुद्धः संभवस्वरूपफलशुद्ध्या, 'भावनाविधिः' अनि-
त्यत्वादिभावनामार्गः, यत्र 'इदम्' अनन्तरोदितं 'युज्यते' सम्यग् घटते 'सर्वं' निरवशेषं 'योगिव्यक्तः' सर्वज्ञप्रका-
शितः स आगम इति, सम्यगागमलक्षणमेतत् ॥६४१॥ ज्ञोऽज्ञो वाऽस्याधिकारी स्याद् ?, उभयथाऽपि वैयर्थ्यमिति कुवा-
दिनिराकरणमाह–'अधिकारी'त्यादिना–अधिकार्यपि चागमस्य 'इह' लोके 'स्वग्रम्' आत्मना अज्ञो हि यः पुमांस्तदर्थस्य,
कथितज्ञः पुनः, नतु कथितमपि यो न जानात्येव, अत एवाह–'धीमान्' बुद्धिमान्, 'तद्वैयर्थ्यं' आगमवैयर्थ्यम्,

'अतः' प्रकागत् 'अ यथा' अन्यन प्रकारेण, सर्वथा ज्ञोऽज्ञो मैत्येचरूपेणैवेति ॥ ६४२ ॥ अन्यचित्तचैतसिकाधगतेरस गार्थविषयाऽन्यमित्याशङ्काऽपोहायाह–'परचित्तादी'त्यादि, 'परचित्तादिधर्माणां' चित्तालोचनसमुद्भोदकपलादिमानरू पाणा 'गत्युपायाभिधानत' तत्परिच्छेदोपायतः तपोमायनाद्यभिधानात् सर्वार्थविषयोऽपि 'एषः' प्रक्रान्त आगमः 'इति' एव 'तत्रापसम्पितिः' तत आगमास्पदार्थव्ययस्येत्यर्थः ॥ ६४३ ॥ वार्तान्तरमाह—

अन्ये त्वभिदधत्येव, युक्तिमार्गकृतश्रमा । शब्दार्थयोर्न सम्बन्धो, वस्तुस्थित्येह विद्यते ॥ ६४४ ॥

न तादात्म्य द्वयाभावप्रसङ्गाद्बुद्धिभेदत । शस्त्राग्युक्तौ मुखच्छेदादिसङ्गात्समयस्थिते ॥ ६४५ ॥

अर्पामनिधिभावेन, तदुत्पत्त्यन्ययोक्तित । अन्याभावनियोगाच्च, न तदुत्पत्तिरप्यलम् ॥ ६४६ ॥

परमार्थैकतानत्वे, शब्दानामनिबन्धना । न स्यात्प्रवृत्तिरर्थेषु, दर्शनान्तरभेदिषु ॥ ६४७ ॥

अतीताजातयोर्वाऽपि, न च स्यादनृतार्थता । वाच कस्याश्चिदित्येषा, बौद्धार्थविषया मता ॥ ६४८ ॥

यान्य इत्यमपोहस्तु, न जाति पारमार्थिकी । तदयोगाद्विना भेद, तदन्येभ्यस्तथास्थिते ॥ ६४९ ॥

सति चास्मिन् किमन्येन ?, शब्दाचद्व्यतीतित । तदभावे न तद्वत्त्व, तद्भ्रान्तत्वात्तथा न किम् ? ६५०

अभ्रान्ति(न्त) जातिवादे तु, न दण्डादपिण्डवद्गति । तत्त्युभयसाङ्कर्ये, न भेदाद्व योऽपि तादृशम् ६५१

'अन्ये त्वि'त्यादि, अन्ये तु बौद्धा अभिदधति 'एवं' वक्ष्यमाणं, किंभूताः ? इत्याह—युक्तिमार्गकृतश्रमाः, जातियु-क्तिनिष्ठा इत्युपहसति । किमभिदधति ? इत्याह—शब्दार्थयोः, लोके प्रसिद्धयोः, न सम्बन्धः कश्चित् 'वस्तुस्थित्या' पर-मार्थेनेह विद्यते, तादात्म्यतदुत्पत्त्यभावात् ॥ ६४४ ॥ एतदेवाह—'न तादात्म्य'मित्यादि, न तादात्म्यं, शब्दार्थयो-रिति गम्यते, कुतः ? इत्याह—द्वयाभावप्रसङ्गाच्च, तदेकत्वेन शब्दार्थद्वयस्याभावापत्तेः, तथा 'बुद्धिभेदतः' शब्दार्थ-योर्विलक्षणबुद्धिभावात् । तथा 'शस्त्राद्युक्तौ' क्षुरिकानलाद्यभिधाने 'मुखच्छेदादि[प्र]सङ्गात्' वदनच्छेददाहप्रसङ्गात्, तथा 'समयस्थितेः' सङ्केतव्यवस्थानादिति ॥ ६४५ ॥ न तदुत्पत्तिरपि, एतदभिधातुमाह—'अर्थे'त्यादि, 'अर्थासंनिधि-भावेन' अर्थासन्निधावपि क्वचित्तच्छब्दभावात्, तथा 'तद्दृष्टौ' देवदत्ताद्यर्थदृष्टौ 'अन्यथोक्तितः' यज्ञदत्तादिशब्दे-नोक्तेः, न चैतत्तदुत्पत्तौ भवति, यदुत कारणाद्वा तद्भाव ? इति, तथा 'अन्याभावनियोगाच्च' अन्यस्मिन् घटे पटश-ब्दः (०ब्दस्य) अभावे वान्ध्येयशब्दादेर्नियोगात्—सङ्केताच्च कारणान्न 'तदुत्पत्तिरपि' अर्थाच्छब्दोत्पत्तिरप्यलं शोभते, न हि यद्यत उत्पत्तिस्वभावं तदन्यभावेऽभावे वा नियोक्तुं शक्यत इति भावः ॥ ६४६ ॥ दोषान्तरमभिधातुमाह—'परमा-र्थे'त्यादि, 'परमार्थैकतानत्वे' परमार्थैकनिष्ठत्वे शब्दानामिष्यमाणे, किमित्याह—'अनिबन्धना' प्रवृत्तिनिमित्तविकला न स्यात् प्रवृत्तिः, प्रधानेश्वरादिशब्दानां वाचकत्वेन, केषु ? इत्याह—'अर्थेषु' वाच्येषु 'दर्शनान्तरभेदिषु' प्रधानेश्वरादिरू-पेषु, अन्योऽन्यं तदभावादिति ॥ ६४७ ॥ तथा 'अतीते'त्यादिना—'अतीताजातयोः' विनष्टानुत्पन्नयोर्वाऽप्यर्थयोरसत्त्वे न स्यात्प्रवृत्तिः, तथा 'न च स्यात्' न च भवेत् 'अनृतार्थता' मृषार्थता 'वाचः' कस्याश्चित्, प्रतारकसम्बन्धिन्या

मपि, अन्यथा परमार्थैकतानत्वायोगात्, 'इति' अस्मादोपमात्रात् 'एषा' वाग् 'बौद्धार्थविषया' परिकल्पितबुद्धिप्रतिभासगोचरा 'मता' इष्टा शब्दार्थविद्भिः सौगतैः ॥ १४८ ॥ एवं सति यत्प्रयति तदाह–'वाच्य' इत्यादिना–वाच्य इत्यपोह एव, परिकल्पितबुद्धिप्रतिभासरूपत्वात्तस्य, 'न जातिः' पारमार्थिकी, गोत्वादिरूपा, परिकल्पिता वाच्या, कुतः? इत्याह–'तद्योगात्' गोत्वादिजातेरघटमानत्वात्, तथा विना भेदं स्वभावत एव गोत्वाधारस्वभावलक्षणगोव्यक्तीनां 'तदन्येभ्यः' अश्वादिव्यक्तिविशेषेभ्यः तथास्थिते', व्यापकत्वेऽपि गोत्वस्य गोव्यक्त्याधेयत्वेनैवावस्थानादित्यर्थः ॥१४९॥ अथ दोषमाह–'सति चे'त्यादिना, सति चास्मिन् 'भेदे' वक्ष्यमाणे किमन्येन–गोत्वादिना कल्पितेन, 'शब्दात्' गवादिरूपात् 'तत्प्रतीतिसिद्धेः' तथाऽध्यवसायवशेन विशिष्टभेदवद्व्यक्तिप्रतीतेः । पराभिप्रायमाह–'तदभावे' भेदाभावे न तद्रूप–विशिष्टभेदवत्त्वं व्यक्तिविशेषाणां, तथा हि स एव तथा स्वभावाभेदो, नापर इति । अत्रोत्तरं 'तद्भ्रान्तत्वात्' तस्य–भेदस्य भ्रान्तत्वात्–कल्पितत्वात् तथा न किं?, कल्पितमेव, तथाऽध्यवसायवशेन तद्रूपत्वं भवत्येवेत्यर्थः, यात्वत्रं ग्रसिमर्थ दोषो, न पुनर्भ्रास्य इत्यभिप्रायः ॥ १५० ॥ एतदेवाह–'अभ्रान्ते'त्यादिना–अभ्रान्ति(न्त)जातिवादे तु (वस्तुवाचकपक्षे) न पुनः किमित्याह–'गतिः' परिच्छित्तिः, तद्भवतीति योगः, किंवदित्याह–'दण्डादण्डिवत्' दण्डात्सकाशाद्दण्डिनीव, नहि दण्डं छिन्द्धीत्युक्तः कश्चिद्दण्डिनं छिनत्ति अन्यत्र शब्दार्थानभिज्ञात्, पराभिप्रायमाशङ्क्य परिहरति–'उभयसाङ्कर्ये तु' जातिव्यक्तिसाङ्कर्ये स्थिप्यमाणे तदप्रतिपत्त्यापत्तिः नीत्या, ननु, 'योऽपि' युष्माकमपि जातिव्यक्तिवादिनां

जातिव्यक्त्योरिति गम्यते, न ह्यन्यथा साक्य
तादृशमिति भ्रान्तमेव, तद्वत्त्वमितियोगः, कुतः? इत्याह–भेदाद्,
भवतीति भावः ॥ ५५१ ॥ वार्त्तान्तराभिधित्सयाऽऽह–'अन्ये त्वि'त्यादिना—
अन्ये त्वभिदधत्येवं, वाच्यवाचकलक्षणः। अस्ति शब्दार्थयोर्योगस्तत्प्रतीत्यादितस्ततः ॥ ६५२ ॥
नैतद्दृश्यविकल्पार्थैकीकरणेन भेदतः। एकप्रमात्रभावाच्च, तयोस्तत्त्वाप्रसिद्धितः॥ ६५३ ॥
शब्दात्तद्वासनाबोधो, विकल्पस्य ततो हि यत्। तदित्थमुच्यतेऽस्माभिर्न ततस्तदसिद्धितः ॥ ६५४ ॥
विशिष्टं वासनाजन्म, बोधस्तच्च न जातुचित्। अन्यतस्तुल्यकालादेर्विशेषोऽन्यस्य नो यतः ॥६५५ ॥
निष्पन्नत्वादसत्त्वाच्च, द्वाभ्यामन्योदयो न सः। उपादानाविशेषेण, तत्स्वभावं तु तत्कृतः? ॥ ६५६ ॥
न ह्युक्तवत्स्वहेतोस्तु, स्याच्च नाशः सहेतुकः। इत्थं प्रकल्पने न्यायादत एव न युक्तिमत् ॥ ६५७ ॥
अनभ्युपगमाच्चेह, तादात्म्यादिसमुद्भवाः। न दोषा नो न चान्येऽपि, तद्भेदाद्धेतुभेदतः ॥ ६५८ ॥
वन्ध्येतरादिको भेदो, रामादीनां यथैव हि। मृषासत्यादिशब्दानां, तद्वत्तद्धेतुभेदतः ॥ ६५९ ॥
परमार्थैकतानत्वेऽप्यन्यदोषोपवर्णनम्। प्रत्याख्यातं हि शब्दानामिति सम्यग्विचिन्त्यताम् ॥ ६६० ॥
अन्यदोषो यदन्यस्य, युक्त्या युक्तो न जातुचित्। व्यक्तवर्णं न बुद्धानां, भिक्ष्वादिः शबरादिवत् ॥

ज्ञायते तद्विशेषस्तु, प्रमाणेतरयोरिव । स्वरूपालोचनादिभ्यस्तथा दर्शनतो भुवि ॥ ६६२ ॥
समयापेक्षण चेह, तत्क्षयोपशम विना । तत्कर्तृत्वेन सफल, योगिना तु न विद्यते ॥ ६६३ ॥
सर्ववाच्यकसावत्वाच्छब्दानां चित्रशक्तित । वाच्यस्य च तथाऽन्यत्र, नागोऽस्य समयेऽपि हि ॥६६४॥
अनन्तधर्मकं वस्तु, तद्धर्मः कश्चिदेव च । वाच्यो न सर्व एवेति, ततश्चैतन्न बाधकम् ॥ ६६५ ॥
अन्यदेवेन्द्रियग्राह्यमन्यच्छब्दस्य गोचर । शब्दात्प्रत्येति भिन्नाक्षो, न तु प्रत्यक्षमीक्षते ॥ ६६६ ॥
अन्यथा दाहसम्बन्धाद्दाह दग्धोऽभिमन्यते । अन्यथा दाहशब्देन, दाहार्थ सम्प्रतीयते ॥ ६६७ ॥
इन्द्रियग्राह्यतोऽन्योऽपि, वाच्योऽसौ न च दाहकृत् । तथाप्रतीतितो भेदाभेदसिद्ध्यैव तत्स्थिते ६६८
अपोहस्यापि वाच्यत्वमुपपत्त्या न युज्यते । असत्त्वाद्वस्तुभेदेन, बुद्ध्या तस्यापि बोधत ॥ ६६९ ॥
क्षणिका सर्वसस्कारा, अन्यथैतद्विरुध्यते । अपोहो यन्न सस्कारो, न च क्षणिक इष्यते ॥ ६७० ॥
एवं च वस्तुनस्तत्त्व, हन्त ! शास्त्रादनिश्चितम् । तदभावे च सुव्यक्त, तदेतत्तुपखण्डनम् ॥ ६७१ ॥
दुष्यणेऽपि चादोष , सत्तवेऽप्यगुणस्तथा । आज्ञानाऽप्रतिपत्त्यादि, शब्दार्थायोगतो ध्रुवम् ॥ ६७२ ॥

'अन्ये तु' जैनाः 'अभिदधति' ब्रुवते 'एवं'-यदुत 'वाच्यवाचकलक्षणः' वाच्यस्वभावोऽर्थः वाचकस्वभावः शब्द
इत्येवंरूपः अस्ति शब्दार्थयोः 'योगः' सम्बन्धः, कुत एतदित्याह-'तत्प्रतीत्यादितः' वाच्यप्रतीतिप्रवृत्तिप्राप्तिनिवेद-
नादेः, 'ततः' शब्दादित्यागोपालाङ्गनमेतद् ॥ ६५२ ॥ (न)सम्भवश्चास्यान्यथेत्यभिधातुमाह-'नैतदि'त्यादि, न 'एतत्'
तत्प्रतिपत्त्यादि दृश्यविकल्पार्थैकीकरणेन, दृश्यः-स्वलक्षणं तदेकीकरणेन विकल्प्यं, दृश्यमित्यध्यवस्येत्यर्थः, कथं नैतत्
इत्याह-'भेदतः' तयोस्तत्त्वाप्रसिद्धितः इति सम्बन्धः, भेदात्कारणात् तयोः-दृश्यविकल्पार्थयोस्तत्त्वाप्रसिद्धितः-एकीकरण-
त्वाप्रसिद्धेः । अत्रैव हेत्वन्तरमाह-एकप्रमात्रभावाच्च, नहि क्षणिकत्वे दृश्यविकल्प्यार्थयोः कालभेदेनैकः प्रमातेत्येकीकर-
णत्वाप्रसिद्धिरेव, स्यादेतत्-दृश्यविकल्प्यार्थैकीकरणं नाम बाह्यालम्बनस्य विकल्प्यस्य बाह्यालम्बनत्वेन प्रतिपत्तिः ॥६५३॥
तथा चाह-'शब्दादि'त्यादि, शब्दादिति कारणे कार्योपचारात् तद्ज्ञानात् 'तद्वासनाबोधः' विशिष्टविकल्पवासनाबोधः
विकल्पश्च विशिष्टः 'ततो हि' तत एव विशिष्टवासनाबोधात् 'यत्' यस्मात् तत्-तस्मात् 'इत्थमुच्यते' दृश्यविकल्प्यावर्था-
वेकीकृत्येत्येवमभिधीयते अस्माभिः, विकल्पवैशिष्ट्येनेत्यर्थः, एतदाशङ्क्याह-न, 'ततः' शब्दात् 'तदसिद्धितः' विशिष्ट-
वासनाबोधासिद्धेरिति ॥ ६५४ ॥ एतदेवाह 'विशिष्टे' त्यादिना-इह 'विशिष्टं' तथाविधविकल्पजननस्वभावं 'वासना-
जन्म' वासनोत्पाद एव 'बोधः' वासना, नत्वन्यः कश्चित्, 'तच्च' विशिष्टवासनाजन्म 'न जातुचित्' न कदाचिद् युज्यते,
कथमित्याह-'अन्यतः' अन्यस्मात् सहकारिणः तुल्यकालादेः विशेषेण तुल्यकालात् अतुल्यकालाद्वा 'विशेषः' वैशि-
ष्ट्यकरणलक्षणः 'अन्यस्य' विशेष्यस्य नो'यतः' यस्मात् न्यायेन ॥६५५॥ एतदेव विकल्पदोषोपन्यासद्वारेणाह-'निष्पन्ने'-

स्यादि, 'निष्पत्तस्या'विति तुल्यकालसहकारिणो न विशेषः, विशेष्यस्यैव तदानीं निष्पत्तेः अनाधेयातिशयत्वात्, विशेषस्य चातिशयत्वादिति, असत्त्वादतुल्यकालादप्यन्यतो न विशेषः, तदा तस्यासत्त्वात्, असतश्चोपकारकरणायोगादिति। तयोरसतोऽपर एव विशेष इत्याशङ्कयाह—'द्वाभ्यामन्योदयो न सः' द्वाभ्यामित्युपादानसहकारिभ्यां सकाशात् अन्योदय'—विशिष्टापरोत्पादो न सः विशेषः, कुतः? इत्याह—'उपादानाविशेषेण' पूर्ववदविशिष्टकार्यजननस्वभावस्यातिरस्कारेण, अन्योदयस्यैवासिद्धेरित्यर्थः, तदेव तत्स्वभाव यत्तदवाप्यान्योदयकारीत्याशङ्कयाह—'तत्स्वभाव तत्कुतः?' तत्स्वभावमित्यनुपकारिणमपि सहकारिणमवाप्य विशिष्टापरजननस्वभावमेव तद्—उपादानमिति कुतो?, न कुतश्चित्, वाङ्मात्रमेतदित्यभिप्रायः ॥१५१॥ पराभिप्रायमाशङ्क्य परिहरति—'न मुक्तव' इत्यादिना—न मुक्तवत् तुल्यकालोऽतुल्यकालः सहकारी, विशेषाभावेन, 'स्वहेतोस्तु' स्वकारणादेव तत्स्वभाववत्, तथाहि—नास्यापि स्वहेतुरविशिष्टः सन्निदं विशिष्टं जनयति, न चान्यतो विशेषभाव इति केवलस्यैव वैशिष्ट्यमेष्टव्यम्, एवं सर्वत्रैवैतदिति प्रतीतिवैशिष्ट्याभावे तद्वासनाबोधानुपपत्तेरिति, दोषान्तरमाह—स्याद्व नाशः भवतामपि 'सहेतुक' तस्याव्यतिरिक्तहेतुसापेक्ष इत्थं प्रकल्पने—स्वहेतोरेवानुपकारिणमपि सहकारिणमवाप्य विशिष्टापरजननस्वभावमेतदित्येव प्रकल्पने, तथाहि—एतदपि वक्तुं शक्यत एव—अकिञ्चित्करमपि नाशहेतुमवाप्य निवृत्तिस्वभावमेतज्जातमिति विशिष्टोत्पादयत्सहेतुको नाशः, न्यायात् भवत्परिकल्पितादेव, अनिष्टं चैतद् अत'—अस्मात्कारणात् 'एतत्' इत्थंस्वभावकल्पनं न 'युक्तिमत्' न्याय्यम्। एष च स्वनीतितो विकल्पानुपपत्तेर्वचनमात्रमेतत्—यतुत इष्यविकल्पार्पणीकरणं नाम बाह्यालम्बनस्य विकल्पस्य बाह्यालम्बनत्वेन प्रतिपत्तिः, विरुद्धं चैतद्,

अवाह्यालम्बनस्य वाह्यालम्बनत्वेन प्रतिपत्तेः, न हि पीतालम्बनस्य नीलालम्बनत्वेन प्रतिपत्तिः, अव्यवस्थापत्तेः, न चा-
विषयत्वस्य प्रमाणं, नायमेव वाह्यप्रतिपत्तिरूपेण प्रवृत्तेः, न चान्यद्, अनभ्युपगमात्, तैमिरिककेशादिज्ञानस्याप्यद्वयबो-
धमात्रवादेऽयोगात्, भावतः सामग्रीभेदाभावात् तिमिरकल्पनिमित्तासिद्धेः, वोधमात्रभेदस्याप्रयोजकत्वात्, प्रपञ्चितं च
तदनेकान्तजयपताकायामिति नेहोच्यते, (संक्षेप) कामवत्त्वात्प्रारम्भस्यास्येति ॥६५७॥ उक्तदोषपरिहारार्थमाह—'अन-
भ्युपगमे'त्यादि, 'अनभ्युपगमात्' अनङ्गीकरणाच्च 'इह' प्रक्रमे 'तादात्म्यादिसमुद्भवाः' तादात्म्यतदुत्पत्तिप्रसूता न
दोषाः 'नः' अस्माकं पूर्ववर्णिताः, न चान्येऽपि 'परमार्थैकतानत्वे' इत्यादिनोक्ताः, कुतः? इत्याह—'तद्भेदात्' शब्दभेदात्
'हेतुभेदतः' कारणभेदेन ॥ ६५८ ॥ एतदेवाभिधातुमाह—'वन्ध्येतरे'त्यादि, 'वन्ध्येतरादिको भेदः' वन्ध्याऽवन्ध्या
च मत्कुणोऽमत्कुणश्चेत्यादि, 'रामादीनां' स्त्रीपुरुषप्रभृतीनां यथैव हि सकललोकप्रतीतः, मृषासत्यादिशब्दानाम्
आदिशब्दात्सत्यामृषादिशब्दपरिग्रहः, तद्भेदः, कुतः? इत्याह—तद्धेतुभेदतः शब्दभेदोत्पत्तेः, सत्यादिभाषाद्रव्यवर्गणानां
भेदाभ्युपगमादिति ॥ ६५९॥ यतश्चैवमतः किमित्याह—'परमार्थे'त्यादि, परमार्थैकनिष्ठत्वेऽपि शब्दानामन्यदोषोपवर्णनं
'न स्यात्प्रवृत्तिरर्थेष्वि'ति प्रत्याख्यातं हि शब्दानां, निराकृतमित्यर्थः 'इति' एवं सम्यग् विचिन्त्यतामेतत् ॥ ६६० ॥
एतदेव स्पष्टयति—'अन्ये'त्यादिना—'अन्यदोषः' अर्थान्तरभूतवस्तुदोषः 'यत्' यस्मात् 'अन्यस्य' अर्थान्तरस्य 'युक्त्या
युक्तः' उपपत्त्या घटमानो न जातुचित्, प्रतिवस्तूपमया प्रकटयति—वक्ति'अवर्णम्' अश्लाघारूपं न 'बुद्धानां' भगवतां
'भिक्ष्वादिः' भिक्षुरुपासको वा, शवरादिवदिति वैधर्म्यनिदर्शनं, तदत्र भिक्ष्वादितुल्याः सत्यशब्दा इतरे शवरादिवद्दुष्टा

एवेति भावः ॥११२॥ न चैतयोर्विशेषो नावगम्यत इत्याह–'ज्ञायते' इत्यादिना–ज्ञायते प्रमातृभिः 'तद्विशेषस्तु' सत्येत रसम्यमेदस्तु प्रमाणेतरयोरिव प्रमाणतदाभासयोः प्रतिभाससाम्येऽपि सति 'स्वरूपालोचनादिभ्यः' दार्ढ्यसंवादनिरूप- णादिभ्यः तथा दर्शनतो 'भुवि' पृथिव्याम्, अनेन प्रकारेण तद्भेदसिद्धेः सदसदर्थप्रतिभासविशेषः, परैरपि संवादेतर- द्वारेण तदभ्युपगमात्, न चैकान्ततुल्ययोः यथावेतराविति भावनीयम् ॥११२॥ एवं सति समयानर्थक्यमित्येतत् परिह रति–'समये'त्यादिना–'समयापेक्षणं' सङ्केतापेक्षणं च 'इह' लोके कथित् तत्क्षयोपशम उपलक्षणात् शब्दार्थसम्बन्ध ज्ञानावरणक्षयोपशमं विना 'तत्कर्तृत्वेन' क्षयोपशमकर्तृत्वेन 'सफलं' सार्थकमेव, 'योगिनां तु' सर्वत्र तत्क्षयोपशमवता न विषये समयापेक्षणम्, असङ्केतितेऽपि स्वयं वाचकप्रयोगादिति ॥ ११३ ॥ अन्यस्याम्यत्र समये विरोध इत्येतत्परिहरमाह– 'सर्वे'त्यादि, 'सर्ववाचकभावत्वात्' देशाद्यपेक्षया विलम्बिताविप्रतीतिजनकत्वेन सर्ववस्तुवाचकस्वभावत्वात् 'शब्दानां चित्रशक्तित्वो वाच्यस्य च तथे'ति तथा तथाऽनेकप्रतीतिनिबन्धनानेकशक्तित्वाच्च वाच्यवस्तुनः', किमित्याह–अन्यत्र नागोऽस्य समयेऽपि, अस्य शब्दस्य घटादेः अन्यत्र–पटादौ समयेऽपि–सङ्केतेऽपि नाग'–नापराधः, अर्थप्रतीतिजनक त्वेनोभयोस्तत्स्वभावत्वादिति ॥ ११४ ॥ अन्वयानुकदोषपरिहारार्थमाह–'अनन्ते' त्यादिना–अनन्तधर्मकं 'वस्तु' घटादि तथा तथाऽनेककार्यकरणात्, एकस्वभावादनेककार्याकारणात्, एकस्वभावादनेककार्यासिद्धेः, तद्भिन्नत्वे चैकत्वविरोधात्, 'तद्धर्मः'वस्तुधर्मः 'कश्चिदेव हि'(च) अभिधेयपरिणामरूपो 'वाच्यः' अभिधेयः, न सर्व एव, सर्वथेन्द्रियान्तरप्राह्योऽ पीति, यस्मादेवं तदेतत् न बाधकं वक्ष्यमाणं यदुच्यते परेण ॥ ११५ ॥ किं तदित्याह–'अ पदेवे'त्यादि, अन्यदेव

इन्द्रियग्राह्यं स्वलक्षणम्, अन्यच्छब्दस्य गोचरः सामान्यलक्षणं, कुतः ? इत्याह–शब्दात्प्रत्येति भिन्नाक्षः–अन्धोऽपि घटादि, न तु प्रत्यक्षमीक्षते चक्षुष्मानिव ॥ ६६६ ॥ एतदेव भावयति–'अन्ये'त्यादि, अन्यथा स्पष्टानुभवेन दाहसम्ब-न्धात् इन्द्रियार्थयोगेन दाहं स्वगतं दग्धोऽभिमन्यते, एवं पुमान्न जानाति, 'अन्यथा' स्वस्पष्टाननुभवतः दाहशब्देन श्रुतेन दाहार्थः संप्रतीयते श्रोत्रा पुरुषेणेत्येतत् न बाधकम् ॥ ६६७ ॥ यथा न बाधकं तथाऽऽह–'इन्द्रिये'त्यादि, 'इ-न्द्रियग्राह्यतः' इन्द्रियग्राह्याद्धर्मादन्योऽपि वाच्यो धर्मः, अपिशब्दादनन्योऽपि, अतोऽयुक्तमिदं–यत् शब्दात्प्रत्येति भिन्नाक्षो, न तु प्रत्यक्षमीक्षत इति, तदभिधेयधर्मस्य कथञ्चित्ततो भेदात्, न च नेक्षत एव, कथञ्चित्तद्ग्राह्यानुविद्धस्यैव शब्दात्प्रतीतेः, यथाक्षयोपशमं तथाऽनुभवादिति, तथाऽसौ वाच्यो धर्मो न च 'दाहकृत्' दाहकरणशीलः, चशब्दाद् दाहकृच्च, अतो युक्तमिदं यद् 'अन्यथा दाहसम्बन्धा'दित्याद्युक्तं, स्पर्शनेन्द्रियगम्यधर्मस्य कथञ्चिदभिधेयतो धर्मतो भेदात्, न च शब्दादपि न तत्प्रतीतिरेव, अस्पष्टाकारतया प्रतीतेः । तथा दाहवेदनं त्वसातावेदनीयकर्मोदयनिमित्तं, न दाहसम्बन्धमात्रजं, तदभावे क्वचिदभावात्, एतदधिकृत्याह–'तथा प्रतीतितः' इत्युक्तवदितरेतरगर्भप्रतीतेः कारणाद्, इन्द्रियग्राह्यतोऽन्योऽपि तथाज्ञानाय, कुतः ? इत्याह–भेदाभेदसिद्ध्यैव जात्यन्तरात्मिकया हेतुभूतया, 'तत्स्थितेः' अभिधेयेन्द्रियग्राह्यधर्मस्थितेरिति भावः ॥ ६६८ ॥ यदुक्तं 'वाच्य इत्थमपोह' इत्येतन्निराकरोति–'अपोहे'त्यादिना—अपोहस्यापि परकल्पितस्य 'वाच्यत्वम्' अभिधेयत्वम् 'उपपत्त्या' युक्त्या 'न युज्यते' न घटते, कुतः ? इत्याह–'अस-त्त्वात्' अविद्यमानत्वात्, 'वस्तुभेदेन' वस्तूनामन्यत्वेन, तथाहि–भिन्नानि च वस्तून्येव, तद्भेदः तद्वाच्यत्वे वा ?, अप-

स्तुच्छोऽन्तरेऽप्रमाणका, न च तस्य वस्तुना सम्बन्ध इति, तस्मादर्थक एवेत्यनुबुध्य एव, विकल्पबुद्धिप्रतिभासोऽव-शिष्यते, तमप्यधिकृत्याह–'बुद्ध्या तस्यापि' विकल्पबुद्ध्याऽऽकारस्यापि भवतीत्येव, असत्त्वादिति वर्तते, कुतः ? इत्याह–'बोधता' इत्यत्रयाद्बोधाभेदेनेति योगः, नहि बोधमात्रवादिनो द्वयबोधव्यतिरिक्तं किंचिदस्तीति क्व इष्टप्रतिभासः ? केशोण्डुकादिप्रतिभासस्तु लोके बोधमात्रसामग्रीभिन्नकर्मतिमिरादिकेशदर्शनादिवो युक्तः, न तु बोधमात्रसामग्रीतः, तस्मात्परमन्तरेण वैशिष्ट्यकरणायोगादिति वस्त्वेव वाच्यं, नापोह इति ॥ ६६९ ॥ इतश्चैतदेवमित्याह–'क्षणिका' इत्यादि, क्षणिकाः 'सर्वसंस्काराः' कृतकाः, भावा इत्यर्थः, अन्यथा यदि वस्तु वाच्यत्वेन नेष्यते एतन्निरुच्यते, कथम् ? इत्याह–अपोह 'यत्' यस्मात् न संस्कारः, अवस्तुत्वात्, न च 'क्षणिकः' नश्वर इष्यते, अवस्तुत्वादेवेति ॥६७०॥ किञ्च–'एवं चे'त्यादि, 'एवं च' अवस्तुवाचकत्वे शब्दानां 'वस्तुनः' स्वलक्षणस्य 'तत्त्वम्' अनित्यत्वादिमत्त्वं हन्त 'शास्त्रात्' पिटकत्रयलक्षणात् 'अनिश्चितम्' अनवगतं वस्तुनीत्या, 'तदभावे च' तत्त्वनिश्चयाभावे च 'सुव्यक्तं' स्पष्टं 'तदेतत्' शास्त्रप्रणयनं तदनुष्ठानं च तुषखण्डनं, फलकणानासादनादिति ॥ ६७१ ॥ दोषान्तरमभिधातुमाह–'बुद्धे'त्यादि, 'बुद्धावर्णेऽपि च' बुद्धश्लाघायामपि वादोषः प्राप्नोति, 'सत्तवेऽपि' तत्स्तोत्रकरणरूपे 'अगुण' गुणो न प्राप्नोति, तथा 'आप्तानाप्रतिपत्त्यादि' आह्वाने सत्यप्रवृत्त्यादि 'शब्दार्थायोगत' शब्दार्थसम्बन्धाभावे 'ध्रुवम्' अवश्यम्, आहूतार्थस्य वच्छब्देनाभणनादिति ॥ ६७२ ॥ वार्तान्तरमाह—

ज्ञानादेव नियोगेन, सिद्धिमिच्छन्ति केचन । अन्ये क्रियात एवेति, द्वाभ्यामन्ये विचक्षणा ॥६७३॥

ज्ञानं हि फलदं पुंसां, न क्रिया फलदा मता । मिथ्याज्ञानात्प्रवृत्तस्य, फलप्राप्तेरसम्भवात् ॥ ६७४ ॥
ज्ञानहीनाश्च यल्लोके, दृश्यन्ते हि महाक्रियाः । ताम्यन्तोऽतिचिरं कालं, क्लेशायासपरायणाः ॥६७५॥
ज्ञानवन्तश्च तद्वीर्यात्तत्र तत्र स्वकर्मणि । विशिष्टफलयोगेन, सुखिनोऽल्पक्रिया अपि ॥ ६७६ ॥
केवलज्ञानभावे च, मुक्तिरप्यन्यथा न यत् । क्रियावतोऽपि यत्नेन, तस्माज्ज्ञानादसौ मता ॥ ६७७ ॥
क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम् । यतः स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात्सुखितो भवेत् ॥६७८॥
क्रियाहीनाश्च यल्लोके, दृश्यन्ते ज्ञानिनोऽपि हि । कृपायतनमन्येषां, सुखसम्पद्विवर्जिताः ॥ ६७९ ॥
क्रियोपेताश्च तद्योगादुदग्रफलभावतः । मूर्खा अपि हि भूयांसो, विपश्चित्स्वामिनोऽनघाः ॥ ६८० ॥
क्रियातिशययोगे च, मुक्तिः केवलिनोऽपि हि । नान्यदा केवलित्वेऽपि, तदसौ तन्निबन्धना ॥ ६८१ ॥
फलं ज्ञानक्रियायोगे, सर्वमेवोपपद्यते । तयोरपि च तद्भावः, परमार्थेन नान्यथा ॥ ६८२ ॥
साध्यमर्थं परिज्ञाय, यदि सम्यक् प्रवर्त्तते । ततस्तत्साधयत्येव, तथा चाह बृहस्पतिः ॥ ६८३ ॥
सम्यक् प्रवृत्तिः साध्यस्य, प्राप्त्युपायोऽभिधीयते । तदप्राप्तावुपायत्वं, न तस्या उपपद्यते ॥ ६८४ ॥

असाध्यारम्भिणस्तेन, सम्यग् ज्ञानं न जातुचित्। साध्यानारम्भिणश्चेति, द्वयमन्योऽन्यसङ्गतम् ॥६८५॥
अत एवागमज्ञस्य, या क्रिया सा क्रियोच्यते । आगमज्ञोऽपि यस्तस्या, यथाशक्ति प्रवर्त्तते ॥ ६८६ ॥
चिन्तामणिस्वरूपज्ञो, दौर्गत्योपहतो न हि । तत्प्राप्त्युपायवैचित्र्ये, मुक्त्वाऽन्यत्र प्रवर्त्तते ॥ ६८७ ॥
न चासौ तत्स्वरूपज्ञो, योऽन्यत्रापि प्रवर्त्तते । मालतीगन्धगुणविद्भर्मे न रमते ह्यलिः ॥ ६८८ ॥
मुक्तिश्च केवलज्ञानक्रियातिशयजैव हि । तत्राद्य एव तद्भावात्तदभावेऽप्यभावत ॥ ६८९ ॥
न विविक्त द्वयं सम्यगेतदन्यैरपीष्यते । स्वकार्यसाधनाभावाद्, यथाऽऽह व्यासमहर्षि ॥ ६९० ॥
पठरश्च तपस्वी च, शूरश्चाप्यकृतव्रण । मद्यपा स्त्री सतीत्व च, राजन्न श्रद्दधाम्यहम् ॥ ६९१ ॥

'ज्ञाने'त्यादि, ज्ञानादेव केवलात् 'नियोगेन' नियमेन 'सिद्धिं' मुक्तिमिच्छन्ति केचन ज्ञानवादिनः (अन्ये) क्रियात एवेति, 'द्वाभ्यां' ज्ञानक्रियाभ्याम् 'अन्ये' ज्ञानक्रियावादिनः विचक्षणा इति ॥ १७३ ॥ ज्ञानवादिमतमाह-'ज्ञान ही' त्यादि, ज्ञानं हि फलदं पुंसां सर्वत्रैव, न क्रिया फलदा मता, कुतः ? इत्याह-मिथ्याज्ञानात्प्रवृत्तस्य सर्वस्यैव फलप्राप्ते रसम्भवात्, नहि मृगतृष्णिकाजलज्ञानप्रवृत्तस्यापि तदवाप्तिरिति भावः ॥ १७४ ॥ ज्ञानाभावे क्लेश एव केवल इत्याह-'ज्ञाने'त्यादिना-ज्ञानहीनाश्च 'यत्' यस्माल्लोके दृश्यन्ते एव 'महाक्रिया' कायवाङ्मनसः ताम्यन्त' सन्तः भति

चिरं कालं, किम्भूताः ? इत्याह–'क्लेशायासपरायणाः' फलशून्यविबाधनाः, अतिदुःखवन्त इत्यर्थः ॥ ६७५ ॥ प्रकृतोपचयमाह–'ज्ञाने'त्यादिना–ज्ञानवन्तश्च प्राणिनः 'तद्वीर्यात्' ज्ञानसामर्थ्येन तत्र तत्र 'स्वकर्मणि' रत्नवाणिज्यादौ विशिष्टफलयोगेन हेतुभूतेन सुखिनो, दृश्यन्त इति वर्त्तते, अल्पक्रिया अपि सन्त इति ॥ ६७६ ॥ प्रधानमपि पुरुषार्थमधिकृत्य ज्ञानमेवोपयोगीत्याह–'केवले'त्यादि, केवलज्ञानभावे च सति मुक्तिः, अन्यथा न 'यत्' यस्मात् क्रियावतोऽपि यत्नेन महता, तस्माज्ज्ञानादसौ मता मुक्तिः ॥ ६७७ ॥ क्रियावादिमतमुपन्यस्यन्नाह–'क्रिये'त्यादि, क्रियैव फलदा पुंसां सर्वत्र, न ज्ञानं फलदं मतं, कुतः ? इत्याह–यतः स्त्रीभक्ष्यभोगज्ञः कश्चिदपि न ज्ञानात्सुखितो भवेत्, नहि सुखहेतुवस्तुज्ञानिनस्तत्प्राप्तावपि सर्वथा निष्क्रियस्य फलमित्यर्थः ॥ ६७८ ॥ क्रियाऽभावे न किञ्चिदित्यभिधित्सुराह–'क्रिये'त्यादि, क्रियाहीनाश्च 'यत्' यस्मात् लोके दृश्यन्त एव ज्ञानिनोऽप्यालस्योपहताः 'कृपायतनम्' करुणाभाजनमन्येषां प्राणिनां, किम्भूताः ? इत्याह–'सुखसम्पद्विवर्जिताः' आन्तरेण सुखेन वाह्यया च सम्पदा रहिता इति भावः ॥ ६७९ ॥ प्रकृतोपचयमभिधातुमाह–'क्रिये'त्यादि, क्रियोपेताश्च प्राणिनः 'तद्योगात्' क्रियासामर्थ्येन उदग्रफलभावतः सुखसम्पद्भावात् मूर्खा अपि सन्तो भूयांसो दृश्यन्ते विपश्चित्स्वामिनः 'अनघाः' अपापा इत्यर्थः ॥ ६८० ॥ प्रधानमपि पुरुषार्थमधिकृत्य क्रियैव प्रधानेत्यभिदधत् आह–'क्रिये'त्यादि, क्रियाऽतिशययोगे शैलेशीलक्षणे सति मुक्तिः 'केवलिनोऽपि हि' सर्वज्ञस्यापि, आस्तां तावदन्यस्य, नान्यस्मिन् काले केवलित्वेऽपि सति, तद् 'असौ' मुक्तिः 'तन्निबन्धना' क्रियाकारणेत्यर्थः ॥६८१॥ उभयवादिमतमाह–'फल' मित्यादिना–फलं ज्ञानक्रियायोगे सति सर्वमेवोपपद्यते

यत्किञ्चित्, 'तयोरपि' च ज्ञानक्रिययोः 'तद्भाव' ज्ञानक्रियाभावः परमार्थेन, न अन्यथा–तद्योगमन्तरेण ॥ १८२ ॥ एतदेवाह–'साध्ये'त्यादि, साध्यमर्थं परिज्ञाय यथावत् यदि सम्यक् प्रवर्त्तते उपायात् ततस्तत्साधयत्येव साध्यं, तथा चाह बृहस्पतिः एतत्संवादि ॥ १८३ ॥ सम्यगित्यादिना–सम्यक्प्रवृत्तिः साध्यस्य ज्ञानोपायशून्या प्राप्त्युपायोऽभिधीयते निश्चयनयेन, तदभावे तदभासो सत्याम् 'उपायस्य' हेतुत्वं न 'तस्या' सम्यक्प्रवृत्तेरुपपद्यते, अतो नासौ सम्यक्प्रवृत्तिरेव ॥ १८४ ॥ एतद्धर्ममाह–'असाध्ये'त्यादिना–असाध्यारम्भिणः पुंसस्तेन कारणेन सम्यग्ज्ञानं तत्त्वनीत्या न जातुचित्, प्रवृत्त्यनङ्गत्वात्, साध्यानारम्भिणश्च, व्यर्थकालक्षपणात्, इत्येवं 'द्वय' ज्ञानक्रियारूपम् 'अन्योऽन्यसङ्गतम्' इतरेतरानुविद्धं, परमार्थेन ॥ १८५ ॥ अत्रैव परमागमं पठयन्नाह–'अत एवे'त्यादि, अत एव कारणादागमज्ञस्य प्राणिनो या क्रिया ज्ञानपूर्विका सा क्रियोच्यते, नान्या, तथा आगमज्ञोऽपि स उच्यते यः 'तस्यां' क्रियायां 'यथाशक्ति' शक्त्यनुरूपं प्रवर्त्तते, नोपेक्षां करोति ॥ १८६ ॥ एतदेव दृष्टान्तेन भावयति–'चिन्तामणी'त्यादि, चिन्तामणिः–दारिद्र्यनाशनो रत्नविशेषः तत्स्वरूपज्ञः पुमान् परमार्थेन 'दौर्गत्योपहत' उद्वेगकारिदारिद्र्याभिभूतः सन् 'नहि' नैव 'तत्प्राप्त्युपायवैचित्र्ये' चिन्तामणिप्राप्त्युपायनानात्वे सति स्वाधीनतयाऽन्यत्र तदुपायं मुक्त्वा प्रवर्त्तते, न हि, किन्तु तत्रैव ॥ १८७ ॥ 'न चासावि'त्यादि, न च 'असौ' प्राणी तत्स्वरूपज्ञः 'च' दौर्गत्योपहतः सन् 'अन्यत्रापि' अन्यत्र उपाये प्रवर्त्तते, दौर्गत्यनाशनाय, प्रतिवस्तूपमया समर्थयति–'मालतीगन्धगुणवित्' जातीकुसुमगन्धज्ञः 'रूमे न रमते चलिः' तृणविशेषे न रमत एव भ्रमरः–तिर्यक्सत्त्वोऽपि, किमुतान्यः ?, एवं न भवतीत्यभिप्रायः ॥ १८८ ॥

प्रधानपुरुषार्थमङ्गीकृत्योभयोपयोगमाह 'मुक्तिश्चे'त्यादिना–मुक्तिश्च प्रधानपुरुषार्थरूपा केवलज्ञानक्रियातिशयजैव हि उभयनिबन्धनैव, नानुभयनिबन्धनेत्यर्थः, कुतः ? इत्याह–'तद्भाव एव' केवलज्ञानशैलेशीक्रियाभाव एव 'तद्भावात्' मुक्तिभावात्, तदभावे चाप्यभावतः, तदभावेऽभावादित्यर्थः ॥ ६८९ ॥ तंत्रान्तरीया अप्येवं व्यवस्थिता इत्याह–'न विविक्त' मित्यादिना–न 'विविक्तं' पृथक् पृथक् द्वयं सम्यगेतत् ज्ञानक्रियारूपम् अन्यैरपीष्यते विचक्षणैः, कस्मात् ? इत्याह–स्वकार्यसाधनाभावात्, नहि ज्ञानमात्रं क्रियामात्रं वा फलदमिति, यथाऽऽह व्यासमहर्षिः, एतत्संवाद्येव वस्तु ॥ ६९० ॥ 'बठरश्चे'त्यादिना–'बठरश्च' मूर्खश्च तपस्वी, तथा 'शूरश्चापि' प्रथमप्रहरणादिक्लैव्यहीनश्चाप्यकृतव्रणः, तथा मद्यपा स्त्री चित्तभ्रमहेतुमद्यभोगवती स्त्री सतीत्वं च राजन्न श्रद्दधाम्यहम्, एतत्परस्परविरुद्धं वस्त्विति ॥६९१॥ मृत्यादिवर्जिता मुक्तिरित्युक्तं प्राक् तदुपदर्शयन्नाह–

मृत्यादिवर्जिता चेह, मुक्तिः कर्मपरिक्षयात् । नाकर्मणः क्वचिज्जन्म, यथोक्तं पूर्वसूरिभिः ॥ ६९२ ॥
दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुरः । कर्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ ६९३ ॥
जन्माभावे जरामृत्योरभावो हेत्वभावतः । तदभावे च निःशेषदुःखाभावः सदैव हि ॥ ६९४ ॥
परमानन्दभावश्च, तदभावे हि शाश्वतः । व्याबाधाभावसंसिद्धः, सिद्धानां सुखमिष्यते ॥ ६९५ ॥
सर्वद्वन्द्वविनिर्मुक्ताः, सर्वाबाधाविवर्जिताः । सर्वसंसिद्धसत्कार्याः, सुखं तेषां किमुच्यते ? ॥ ६९६ ॥

अमूर्त्ता सर्वभावज्ञास्त्रैलोक्योपरिवर्त्तिनः । क्षीणसङ्गा महात्मानस्ते सदा सुखमासते ॥ ६१७ ॥
एता गाथा उपश्रुत्य, भावयन् बुद्धिमान्नरः । इद्धोपन्यस्तशास्त्राणां, भावार्थमधिगच्छति ॥ ६१८ ॥

'मृत्यावी'त्यादि, 'मृत्यादिवर्जिता' मृत्युजराजन्मवर्जिता च 'इह' लोके प्रवचने वा मुक्तिः, कुतः ? इत्याह–'कर्म परिक्षयात्' सर्वथा कर्मविगमात्, यदि चैवं ततः किमित्याह–नाकर्मणः सत्त्वस्य कश्चित् 'जन्म' संमूर्छनोत्पत्त्यादिरूपं, एतत् चात्रैवादौ प्रादुर्भवति–न 'अङ्कुरः' धान्याङ्कुरादिः, कर्मबीजे तथा दग्धे ज्ञानावरणादौ न रोहति 'भवाङ्कुरः' नारकादिरूपः ॥ ६१३ ॥ 'जन्मे'त्यादि, जन्माभावे सामान्येनैव जरामृत्योः प्रतीतयोरभावः, कुतः ?–'हेतु भावतः' निमित्ताभावात्, 'तदभावे च' (जन्म) जरामृत्यभावे च, किमित्याह–निःशेषदुःखाभावः रोगशोकादिदुःखा भावः 'सदैव हि' आकालमिति भावः ॥ ६१४ ॥ अथमेव च सुखरूप इत्येतदाह–'परमे'त्यादि, 'परमानन्दभावः' प्रकृष्टस्वास्थ्यलक्षणः 'तदभावे हि' निःशेषदुःखाभावे 'शाश्वतः' अप्रतिपाती 'व्याबाधाभावसंसिद्धः' सर्वथाव्याबाधानिवृत्त्युपजातः सिद्धानां सुगमिष्यते, परमसुखस्वरूपत्वेः ॥६१५॥ सिद्धानामेव स्वरूपमाह–'सर्वद्वन्द्वे'त्यादिना–सर्व द्वन्द्वविनिर्मुक्ता, द्वन्द्वानि–शीतोष्णादीनि, सर्वाबाधाविवर्जिता', आबाधाः–क्षुत्तृडादिरूपाः, सर्वसंसिद्धसत्कार्याः मात्सर्यम्–आनन्दोपयोगि सुखं, तेषां किमुच्यते ?, यत एवमविद्यमानतृष्णा इति ॥ ६१६ ॥

माह–'अमूर्त्ते'त्यादिना– 'अमूर्त्ताः' रूपादिविकलाः सर्वभावज्ञाः ज्ञस्वभावत्वेन निरावरणाः 'त्रैलोक्योपरिवर्त्तिनः' प्रकृष्टगुणतया लोकान्तस्थाः, क्षीणसङ्गाः, आकालं तन्निवृत्तेः, 'महात्मानः' अचिन्त्यशक्तियुक्तास्ते सदा सुखमासते, एकरूपतयैव ॥ ६९७ ॥ फलोपदर्शनद्वारेणोपसंहरन्नाह–'एता'इत्यादि, एता वार्त्ता अनेकशास्त्रगता 'उपश्रुत्य' उप–सामीप्येन सम्यक्सम्प्रदायरूपेण श्रुत्वा 'भावयन्' पर्यालोचयन् 'बुद्धिमान्नरः' प्राज्ञ इत्यर्थः, किमित्याह–'इह' प्रकरणे उपन्यस्तशास्त्रनिर्दिष्टानां लोकायतादिप्रणीतानां 'भावार्थं' सोपयोगेतरादिरूपम् 'अधिगच्छति' जानाति ॥ ६९८ ॥ प्रकरणसञ्ज्ञाऽभिधित्सयाऽऽह–

शतानि सप्त श्लोकानामनुष्टुप्छन्दसां कृतः । आचार्यहरिभद्रेण, शास्त्रवार्त्तासमुच्चयः ॥ ६९९ ॥

कृत्वा प्रकरणमेतद्यदवाप्तं किञ्चिदिह मया कुशलम् । भवविरहबीजमनघं लभतां भव्यो जनस्तेन ७००

यं बुद्धं बोधयन्तः शिखिजलमरुतस्तुष्टुवुर्लोकवृत्त्यै,
ज्ञानं यत्रोदपादि प्रतिहतभुवनालोकवन्ध्यत्वहेतुः ।
सर्वप्राणिस्वभाषापरिणतिसुभगं कौशलं यस्य वाचां
तस्मिन् देवाधिदेवे भगवति भवताऽधीयतां भक्तिरागः ॥ ७०१ ॥

'शतानी'त्यादि, शतानि सप्त श्लोकानां सङ्ख्ययाऽनुष्टुप्छन्दसां 'कृता' उपरचिता, केन ? इत्याह–आचार्यह रिभद्रेणेति कर्तुरिदं नाम, शास्त्रवार्तासमुच्चय इति प्रकरणस्य (नाम ॥ ६९९ ॥ प्रकरणं) निर्माय स्वप्रणिधानमुपदर्शयन्नाह–'कृत्वे'त्यादि, कृत्वा प्रकरणमेतदिति यदवाप्तं तदाह, यद् 'अवाप्त' प्राप्तं किञ्चिदिह मया 'कुशलं' पुण्यं 'भवविरहबीज' मोक्षबीजम् 'अनघ' मेवं 'लभतां' प्राप्नोतु भव्यो जन' 'तेन' पुण्येनेति । अनेन ग्रन्थकारो भववि रहे मत्यन्तानुरागं तथा सर्वेषु कल्याणाशयम् असत्यामृषाभाषाविषयत्वं चाहेत्येवं प्रतिपत्तव्यम् ॥ ७०० ॥

॥ समाप्तेयं शास्त्रवार्तासमुच्चयटीका दिक्प्रदानाम्नी, कृतिः सिताम्बराचार्यहरिभद्रस्येति ॥

ग्रन्थाग्रमपि चोद्देशादनुष्टुप्छन्दसां कृतम् । द्वे सहस्रे शते द्वे च, पञ्चाशच्चेति लेखनम् ॥ १ ॥

इति सूरिपुरन्दरश्रीहरिभद्राचार्यरचित स्वोपज्ञवृत्त्याऽलङ्कृत

## श्रीशास्त्रवार्तासमुच्चयः समाप्तः ।

## श्रीआगमोदय–समिति तरफथी हाल मळतां ग्रंथो.

| अंक. | नाम. | किमत. |
|---|---|---|
| ३४ | विशेषा ०गाथा विषयक्रम | ०–५–० |
| ३५ | विचारसारप्रकरण | ०–८–० |
| ३६ | गच्छाचारपयन्नो | ०–६–० |
| ३७ | धर्मबिन्दुप्रकरण | ०-१२-० |
| ३८ | विशेषा ०भाषांतर भाग १ लो | २–०–० |
| ३९ | जैनफिलोसोफी (अंग्रेजी) | १–०–० |
| ४० | योग ” ” | ०-१४-० |
| ४१ | कर्म ” ” | ०-१२-० |
| ४३ | अनुयोगद्वारसूत्र | २–८–० |
| ४४ | नंदीसूत्र | २–४–० |
| ४५ | भक्तामरकाव्य संग्रह भाग १ लो | ३–०–० |
| ४६ | दशपयन्ना छायायुक्त | २–०–० |
| | | २–८–० |

| अंक. | नाम. | किमत. |
|---|---|---|
| ४८ | विशेषा ०भाषांतर भाग २ जो | ३–०–० |
| ५० | जीवसमास | १–८–० |
| ५१ | शोभनस्तुति (संस्कृत) | प्रेसमां |
| ५२ | स्तुतिचतुर्विंशतिका सचित्र शोभनमुनिकृत | ६–०–० |
| ५३ | चतुर्विंशतिका सचित्र बप्पभट्टीकृत | ६–०–० |
| ५४ | भक्तामरकाव्यसंग्रह भाग २ जो | ३–८–० |
| ५५ | नंद्यादिसप्तसूत्रगाथा अकारादियुतो विषयानुक्रम | २–०–० |
| ५६ | आवश्यक मलयगिरिकृत टीकायुक्त भाग १ लो | ४–०–० |
| ५७ | जैनधर्मवरस्तोत्र | प्रेसमां |
| ५८ | लींबडीभंडारना हस्तलिखितपुस्तकोनुं सूचीपत्र | १–४–० |
| | लोकप्रकाश गुजरातीभाषांतर भाग १ लो | प्रेसमां |
| | आवश्यक मलयगिरिकृत टीकायुक्त भाग २ जो | प्रेसमां |

प्राप्तिस्थान सुरत गोपीपुरा.

इति सूरिपुरन्दरश्रीहरिभद्राचार्यरचितः स्वोपज्ञवृत्त्याऽलङ्कृत

# श्रीशास्त्रवार्त्तासमुच्चयः समाप्तः ।